सच्छब्दोऽव्याकृतनामरूपवस्तुपर सत एव सदुत्पत्तेर्दर्शनात्। असत सदुत्पत्तौ कोद्रवादिभ्यो गोधूमचणकादीनामपि कदाचिदुत्पत्ति स्यात्। सर्वेषु सर्वाभावस्य सत्त्वात्। तस्मादसत सदुत्पत्तेरसम्भवादसच्छब्दोऽसन्नामरूपसद्वस्तुपर एव। शब्दान्तराच्च "सदेव सोम्येदमग्र आसी"दिति सच्छब्देनापक्रमाच्च सदेवासीत्। तत एव च जगदुत्पत्तेरिति॥ २।१।१८॥

## पटवच्च ॥२।१।१९॥

यथा कारणभूतास्तन्तव एव पट इत्यभिधा लभन्ते। तत्र नामरूपावस्थाविशेषस्यैव भेदो न तु वस्तुतो भेद। एव सूक्ष्मचिदचिच्छरीर ब्रह्मैव स्थूलचिदचिच्छरीरक जगदित्युच्यते। अत्रापि नामरूपावस्थाविशेषस्यैव भेदो वस्तुतस्त्वभेद इति जगतो ब्रह्मानन्यत्वमेव॥ २।१।१९॥

## यथा च प्राणादि: ॥२।१।२०॥

यथा वायुरिति त्रिवृत्कृतो वायुरेक एव स्थानविशेषमास्थाय प्राणापानादिसज्ञा लभमान कार्यान्तराणि विधत्ते। तथैव सूक्ष्मचिदचिच्छरीर ब्रह्मापीद स्थूलचिदचिच्छरीर भवज्जगदित्याख्या लभत इति जगतो ब्रह्मानन्यत्व सिद्धम्॥ २।१।२०॥

*इत्यारम्भणाधिकरणम्।*

---

*( अथ सर्वव्याख्यानाधिकरणम्। )*

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥२।१।२१॥

इतरस्य जीवस्यारम्भणशब्देन "अयमात्मा ब्रह्म" "तत्त्वमसीत्यादि"भिर्ब्रह्माभेदेन तदनन्यत्वव्यपदेशात्। ब्रह्मणश्च 'यतो वा

इमानि" (तै० ।३।१।) इति नामरूपव्याकरणपूर्विकायाः सृष्टे श्रवणात् । जगत्सर्गे जीवस्य दुःखित्वजरामरणादिब्रह्मधर्मरहितत्वदर्शनाद्, ब्रह्मणि स्वानन्यस्य जीवस्य हिताकरणादि हितस्य वाञ्छितस्याकरणम् । आदिपदेनावाञ्छितस्यादुःखजरामरणादेः करणं चेतिदोषस्य प्रसक्तिः स्यादतो ब्रह्मणो जगत्कारणत्वं जगतस्तदनन्यत्वं च न सम्भवतीति ॥ २।१।२१ ॥

सिद्धान्तयति—

## अधिकन्तु भेदनिर्देशात् ॥२।१।२२॥

तुशब्दः पूर्वपक्षव्यावर्तकः । जन्मजरामरणादिदुःखराशेर्जीवादधिकमर्थान्तरभूतम्ब्रह्म । कस्मात् ? भेदनिर्देशात् । "ज्ञाज्ञौ द्वावजावीशानीशौ" (श्वे० ६।९) "स कारणं करणाधिपाधिपः" (श्वे० ६।९) "प्रधानक्षेत्रज्ञपतिर्गुणेशः" (श्वे० ६।१) "पृथगात्मानं प्रेरितारञ्च मत्वा" "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" (मु० ३।१।१) "यस्यात्मा शरीरम्" (बृ० ३।७।२२) इत्येवमादिभिः सर्वज्ञत्वेशत्वतत्पतित्वतरत्स्रष्टृत्वाकर्मवश्यत्वतत्सेव्यत्वादिधर्मैरज्ञत्वादिधर्मवतः प्रत्यगात्मनो ब्रह्मणो भेदेन निर्देशात् । व्याप्यत्वेनाल्पदेशवर्तिनः प्रत्यगात्मनो व्यापकत्वेनाधिकदेशवर्तिनः परमात्मन आधिक्यनिर्देशाच्च । तथा च तत्त्वमस्यादिश्रुतयो जीवस्य ब्रह्मव्याप्यत्वेन तदपृथक्सिद्धेस्तदभिन्नसत्ताकत्वादनन्यत्वं ज्ञापयन्ति । ज्ञाज्ञावित्येवमाद्याः श्रुतयो जीवब्रह्मणोः स्वरूपभेदं बोधयन्ति । एवञ्च जीवपरयोर्भेदस्य श्रुतिशतसिद्धत्त्वाज्जीवानां प्राक्तनकर्मानुगुण्येन ब्रह्म तद्विलक्षणां सृष्टिं करोति । तथा- [illegible] सुखदुःखादिभाक्त्वं जीवानामिति न कथमपि [illegible] । न वा तस्य तदनन्यत्वविरोधो न च स्वरूप-[illegible] सम्भव[illegible] ।

परैर्भेदश्रुतीनामौपाधिकत्वमभेदवादिनीनान्तु पारमार्थिकत्वमित्युच्यते । तदयुक्तम् । तथा सति हिताकरणादिदोषस्यानिवार्यत्व स्यात् । अभेदश्रुतीना पारमार्थिकत्व भेदश्रुतीनान्त्वौपाधिकत्वमित्युक्तौ प्रमाणाभावश्च ।

एवञ्च "तदनन्यत्वमारम्भणशब्दादिभ्य" ( ब्र सू २।१) इत्यनेन जगतो ब्रह्मोपादानत्व तेन तदनन्यत्वमुपपाद्य तत्र केवलस्य ब्रह्मणो जगदुपादानत्व चिदचिद्विशिष्टस्य वेत्याशङ्कानिवृत्तये केवलस्य ब्रह्मणो जगदुपादानत्वे जगद्धिताकरणादिदोषप्रसक्तिमभिधायाधिकन्तु भेदनिर्देशादिति चिदचिद्विशिष्टस्य ब्रह्मणो जगदुपादानत्व स्फुटीकृतम् । ततश्च तत्वमस्यादिश्रुतीना ब्रह्मणो जगदुपादानकारणत्वबोधनेन साफल्याद् भेदश्रुतीना केवलस्य तस्य जगत्कारणत्वे दोषनिदर्शनेन चिदचिद्विशिष्टस्यैव ब्रह्मणो जगदुपादानत्व स्फुटीकरणत्वेन सार्थक्यादुभयविधश्रुतीना सार्थक्य निष्पद्यते । जीवब्रह्मणोर्भेदस्य वास्तविकत्वेन लौकिकवैदिकव्यवहाराणा कर्मज्ञानभक्तियोगप्रतिपादकश्रुतीनामर्थपञ्चकबोधकाना सर्वेषा वेदान्ताना वेदोपबृहणीभूतस्मृतीतिहासपुराणादीनाञ्च सर्वेषा सार्थक्यमुपपद्यतेतराम् । जीवस्वरूपस्य काल्पनिकत्वे तु सर्वमिदमसङ्गत स्यात् । तस्माद्वेदैकप्रमाणे सर्वेषा वेदान्ताना सार्थक्यनिष्पत्तयेऽवश्य ब्रह्मणा भिन्नस्य जीवस्वरूपस्य वास्तवत्वमङ्गीकर्तव्यमिति ॥ २।१।२२॥

## अश्मादिवच्च तदनुपपत्तिः ॥२।१।२३॥

यथा पृथिवीविकाराणामश्मना वज्रवैडूर्येन्द्रनीलपद्मरागादीना पृथिव्यैक्यमुपपद्यते । यथा काष्ठभेदाना तृणादीनामचिद्विशेषाणामचिदक्यञ्चोपपद्यते न तु निखिलहेयप्रत्यनीकानन्तकल्याणगुणसागरब्रह्मस्वरूपेणैक्यम् । तथा चेतनस्यापि कर्मपरतन्त्रत्वाज्ञत्वानी

शत्वनियम्यत्वादिधर्मकस्यापहतपाप्मत्वसर्वज्ञत्वसर्वेश्वरत्वसर्वनियामकत्वादिधर्मविशिष्टेन ब्रह्मस्वरूपेणैक्यानुपपत्तिरवगन्तव्येति। "अयमात्मा ब्रह्म" तत्त्वमसीत्यादिसामानाधिकरण्यनिर्देशस्तु "यस्यात्मा शरीरम्" इत्यादिश्रुतिभिर्जीवस्य ब्रह्मशरीरत्वेन ब्रह्मप्रकारत्वावगमार्थं इति सर्वं समञ्जसम् ॥२।१।२३॥

*इति सर्वव्याख्यानाधिकरणम् ।*

---

*अथोपसंहारदर्शनाधिकरणम् ।*

## उपसंहारदर्शनान्नेतिचेन्न क्षीरवद्धि ॥२।१।२४॥

लोके कुलालादेर्दण्डचक्राद्युपसंहारदर्शनादुपादानस्य मृदः स्वभिन्नकुलालाद्युपसंहर्तृदर्शनाद्वाऽसहायस्य ब्रह्मणो न जगत्कर्तृत्वं तदुपादानत्वञ्चोपपद्यत इतिप्राप्त आह "इति चेन्न, क्षीरवद्धी"ति। यथा क्षीरमसहायं दध्याकारेण परिणमते तद्वच्चिदचिच्छरीरं ब्रह्मापि जगदाकारेण परिणमते । दृष्टान्तभूतस्य क्षीरस्य त्रिवृत्कृततत्त्वेन व्याप्तत्वान्न दृष्टान्तदार्ष्टान्तिकयोर्विरोधः । श्रुतिरपि जगत्सृष्टौ निरपेक्षत्वमेव ब्रह्मणोऽभिधत्ते "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" ( श्वे० ६।९। ) इति । अत्र यथाक्षीरस्य दध्याकारेण परिणामेऽविश्रयणातञ्चनादियोगाऽपेक्षितस्तथा ब्रह्मापि प्रकृतियोगमाश्रित्य जगज्जनयतीति दृष्टान्तसाम्यम् ॥२।१।२४॥

## देवादिवदपि लोके ॥२।१।२५॥

यथा देवादयः स्वे स्वे लोके स्वसङ्कल्पमात्रेणैव वस्तूनि सृजन्ति। तथा परमात्मापि स्वसङ्कल्पमात्रेण सर्वं जगदुत्पादयतीति ॥२।१।२५॥

*इत्युपसंहारदर्शनाधिकरणम् ।*

---

*अथ कृत्स्नप्रसक्त्यधिकरणम् ।*

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥२।१।२६॥

ननु ब्रह्मणो जगत्कारणत्वं न सम्भवति । कुत ? तस्य सावयवत्वे कृत्स्नस्य दुग्धस्य दध्याकारेण परिणामवत्कृत्स्नस्य ब्रह्मणो जगदाकारेण परिणामप्रसक्तेः । ततश्च तस्य कार्यातिरिक्तत्वानुपपत्तेः । चिदचिच्छरीरकस्य ब्रह्मणः कारणत्वकर्मत्वपक्षेऽपि शरीरांशस्यापि तस्य कार्यत्वप्रसङ्गः । तस्य निरवयवत्वपक्षे निष्कलमित्यादि निरवयवत्वशब्दकोपप्रसक्तेरिति न ब्रह्मणो जगत्कारणत्वमिति पूर्वपक्षः ॥२।१।२६॥

सिद्धान्तयति—

## श्रुतेस्तु शब्दमूलत्वात् ॥२।१।२७॥

तु शब्दः पूर्वपक्षव्यावर्तकः । नैव कृत्स्नप्रसक्तिरस्ति । कुतोऽवगम्यते ? श्रुतेः । 'एतावानस्य महिमा ततोज्यायांश्च पूरुषः" (यजु०) "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" "स भूमिं सर्वतस्पृत्वाऽत्यतिष्ठद्दशाङ्गुलम्" (यजु०) इत्येवं कृत्स्नस्य जगतस्तत्पादमात्रत्वश्रवणात् । ब्रह्मणो जगद्व्यतिरिक्तत्रिपादत्वेनाधिक्यश्रवणाच्च । "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदि" ति गीतास्मृतेश्च । ननु दुग्धदध्यादिन्यायेन श्रुतेर्बाधितत्वान्न तदुक्तमुपपद्यत इत्याशङ्क्याह शब्दमूलत्वादिति । 'नैषातर्केण मतिरापनेया" (का १।२।९) इति श्रुतेस्तर्काप्रतिष्ठानादित्यादिन्यायाच्च 'तं त्वौपनिषदं पुरुषं पृच्छामि" (बृ० ३।९।२६) इति तस्योपनिषन्मात्रगम्यत्वस्यैवाभिधानात् । "नावेदविन्मनुते तम्बृहन्तम्" (तै० ब्रा० ३।१२।९।७) इति च ब्रह्मणो वेदमनधिगतवतोऽज्ञेयत्वबोधनेन तस्य वैदिकप्र

माणकत्व निष्पद्यते। तथा च सावयवनिरवयवत्ववादिभिर्वचनैरपि न विरोधो ब्रह्मणो जगदुपादानत्वस्येति ॥२।१।२७॥

## आत्मनि चैवं विचित्राश्च हि ॥२।१।२८॥

विचित्राश्च यथाग्न्येकदेशस्यानेकप्रकारवस्तुकरणेनानेकधा शक्तिर्दृश्यते। यथा जलैकदेशस्यानेकप्रकारवस्तुपिण्डीकरणेनानेकधा शक्तिरवगम्यते। एव ब्रह्मण्यपि विचित्रसृष्टिरचनाहेतुभूता विचित्रा शक्तय सन्ति। तथा च "शक्तय सर्वभावानामचिन्त्यज्ञानगोचरा। यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तय। भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता" ( वि० पु० अ० १ अ० ३।२।३ ) इति विष्णुपुराणवचनादवगम्यते। एवञ्च सूक्ष्मचिदचिच्छरीरकस्य ब्रह्मणोऽपि विचित्रजगद्रचनोपपद्यते ॥२।१।२८॥

*इतश्च ब्रह्मण एव जगत्कर्तृत्वम्।*

## स्वपक्षदोषाच्च ॥ २।१।२९ ॥

साङ्ख्यपक्षेपि प्रधानस्य सावयवत्वे निरवयवत्वे च कृत्स्नप्रसक्त्यादिदोषप्रसक्तेश्च॥ २।१।२९ ॥

## सर्वोपेता च तद्दर्शनात् ॥२।१।३०॥

पूर्वं परादेवता सर्वशक्तियुक्तेत्यभिहितम्। तस्याश्च सर्वशक्तियुक्तत्वमिदानीमनेन दर्शयति। सर्वोपेता सर्वशक्तियुक्ता परादेवता कुत ? तद्दर्शनात्। "सर्वकर्मा सर्वगन्ध" "परास्य शक्तिर्विविधैव श्रूयते" (श्वे० ६।८) इत्येवमादिश्रुतिषु तस्या सर्वशक्तियोग स्पष्टमभिधीयते ॥ २।१।३० ॥

## विकरणत्वान्नेति चेत्तदुक्तम् ॥२।१।३१॥

"न तस्य कार्यं करणञ्च विद्यते" (श्वे० ६।८) इति ब्रह्मण करण रहितत्वश्रवणान्न जगत्कारणत्वमुपपद्यत इति चेत्तदुक्तम्। यद

त्रोत्तर वक्तव्यं तत्पूर्वमेवोक्तम् "विलक्षणत्वात्" "देवादिवदपि लोके" "श्रुतेश्च शब्दमूलत्वात्" इत्यादिषु। "स कारण करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिप" (श्वे० ६।९।) "प्रधानक्षेत्रज्ञनियामकस्य च 'स कारण' मिति सर्वकारणत्वश्रवणात्"। "न तस्य कार्यं करणञ्च विद्यत" इति तु विलक्षणविविधशक्तेस्तस्य करणाधीना जगद्रचना नास्तीति ज्ञाप्यते। अन्यथा "स कारण कारणाधिपाधिप" इति श्रौतवाक्येन सम विरोध स्यादेकस्याऽप्रामाण्य वेति यथोक्तमेव मन्तव्यमिति ॥ २।१।३१ ॥

*इति कृत्स्नप्रसक्त्याधिकरणम् ।*

---

( *अथ प्रयोजनवत्त्वाधिकरणम् ।* )

## न प्रयोजनवत्त्वात् ॥२।१।३२॥

स्वत एवावाप्तसमस्तकामस्य ब्रह्मणो जगत्सृष्ट्यादिव्यापारो न सम्भवति। कुत ? सृष्ट्यादिव्यापारस्य प्रयोजनवत्त्वात्। प्रयोजनमन्तरेण प्रेक्षावत्प्रवृत्त्यनुपपत्ते ॥ २।१।३२ ॥

सिद्धान्तमाह—

## लोकवत्तु लीलाकैवल्यम् ॥२।१।३३॥

यथा राजादेर्लोके कन्दुकादिक्रीडाविशेषा केवल लीलारूपा एवोपलभ्यन्ते तथाऽवाप्तसमस्तकामस्यापि ब्रह्मणो जगत्सृष्ट्यादयो व्यापारा लीलाकैवल्यमेव। केवलमेव कैवल्यम्। लीलामात्रमिति भाव: ॥ २।१।३३ ॥

ब्रह्मणो लीलार्थमपि जगत्सृष्ट्यादिक न सम्भवति, देवमनुष्यपशुपक्षिकृमिकीटादिविषमसृष्ट्या तत्रैव वैषम्यप्रसक्ते.। सर्वसंहर्तृत्वेन च नैर्घृण्यप्रसक्तेरित्याशङ्कयाह—

## वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॥२।१।३४॥

ब्रह्मणो विषमसृष्टिजगत्संहारप्रयोजके वैषम्यनैर्घृण्ये न स्याताम्। कुतः? सापेक्षत्वात्। जीवानां पूर्वकर्मसापेक्षत्वात्। परमेश्वरो जीवकृतपूर्वशुभाशुभकर्मानुसारेण देवमनुष्यादिरूपां विषमां सृष्टिं तत्संहारञ्च करोति। अतस्तत्तत्कर्मैव तत्तद्वैषम्ये तत्संहारे च हेतुर्न परमेश्वरः। तथा हि दर्शयति। पूर्वार्जितकर्मानुसारेण शुभामशुभाञ्च सृष्टिं दर्शयति श्रुति। "पुण्यः पुण्येन कर्मणा भवति पापः पापेन" (बृ० ४।४।५) इति न चात्र कर्मैव देवमनुष्यादिसृष्टेर्हेतुश्चेत्तर्हि किमीश्वरेणेति वाच्यम्। बीजे सत्यपि पर्जन्यमन्तरेणाङ्कुरोत्पत्तिर्यथा न भवति तथा कर्मसु सत्स्वपि परमात्मानमन्तरेण न देवमनुष्याद्याकारा जगत्सृष्टिरुपपद्यत इति ॥२।१।३४॥

## न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च ॥२।१।३५॥

"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" (छा० ६।२।१) इत्यादिना सृष्टेः पूर्वं कर्माविभागनिश्चयान्न तदानीं कर्मास्तीत्यतस्तत्सापेक्षा विषमा सृष्टिर्नोपपद्यते। अथेश्वरस्यैव तत्तत्कर्मणोऽपि कर्त्तृत्वमभ्युपेयत इतिचेत्तत्तत्कर्मोत्पादनहेतुका तत्र वैषम्यनैर्घृण्यापत्तिस्तदवस्थैवेति चेन्न, जीवानां कर्मणाञ्चानादित्वाद्बीजवृक्षवत् कर्मणां देवमनुष्यादीनाञ्च हेतुहेतुमद्भावस्यानादित्वावगमात्। कुतः? संसारस्यानादित्वमित्यत आह–उपपद्यते चाप्युपलभ्यते चेति। अकस्मादेव सृष्टिस्वीकारे पूर्वसृष्टिसादृश्यानुपपत्तिः। मुक्तस्यापि पुन. सृष्टिप्रसङ्गो दुर्निवारः। तस्माज्जगतोऽनादित्वमभ्युपेयम्। श्रुतिस्मृत्योरप्यस्यानादित्वमुपलभ्यते। "अजामेकां लोहितशुक्लकृष्णां बह्वी. प्रजा. सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते" (श्वे०

४।५।) इति प्रकृतिपुरुषयोरजत्वश्रुते "धाता यथा पूर्वमकल्पयत्" इत्युत्तरसृष्टे पूर्वसृष्टिसादृश्यश्रवणाच्च जगतोऽनादित्व सिद्धम् ।

"प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।" (गी०) इति प्रकृति पुरुषयोस्तत्संसर्गरूपससारस्य चानादित्वस्मरणात् ॥२।१।३५॥

## सर्वधर्मोपपत्तेश्च ॥२।१।३६॥

प्रधानकारणताया येषा धर्माणामनुपपत्तिरुक्ता तेषा कारण त्वोपपादकानां धर्माणा समेषामेव पूर्वोक्तानामनुक्तानामप्यनवधि कनिरतिशयासख्येयज्ञानशक्त्यादिगुणविशिष्टे ब्रह्मण्युपपत्तेश्च ब्रह्मैव जगत्कारणमितिनिरवद्यम् ॥२।१।३६॥

*इति प्रयोजनवत्त्वाधिकरणम् ।*

इतिश्रीकान्यकुब्जद्विजोत्तमकुलोत्तसगुणपुरुषनरत्नाभिज्ञविरक्तवैष्णवप्रवर
श्रीसम्प्रदायाभिवर्धकायोध्यकबिन्दु श्रीपीठसस्थापक
श्रीमद्रामानन्दाचार्यश्रीरामप्रसादस्वामिकृत
ब्रह्मसूत्रभाष्यदीप श्रीजानकीकृपाभाष्य
सहितमारे द्वितीयाध्यायस्य
प्रथम पाद ॥ १ ॥



*श्रीभगवद्रामप्रसादाचार्यप्रणीत श्रीजानकीकृपाभाष्यस्य संक्षिप्तसारे*

## द्वितीयाध्यायस्य द्वितीयः पादः ।

*अथ रचनानुपपत्त्यधिकरणम् ।*

समतीतेन ग्रन्थेन साङ्ख्यादिकल्पितानर्थनिरासेन वेदान्तवाक्यानां परमपुरुषे ब्रह्मणि समन्वयः प्रदर्शितः । अथ मुमुक्षूणां सम्यग्ब्रह्मस्वरूपावगमाय सांख्यादिमतदूषणप्रधानो द्वितीयपाद आरभ्यते—

### रचनानुपपत्तेश्च नानुमानम् ॥२।२।१॥

पूर्वं वेदान्तानां प्रधानपरत्वनिरासेन ब्रह्मपरत्वमेवदृढीकृतमिह तु वेदविरुद्धानां प्रधानसाधकयुक्तीनां मृषात्वमुच्यत इति न पौनरुक्त्यम् । तत्र सांख्याभिमतं केवलमचेतनं प्रधानं जगतः कारणमिति वादः किं सद्युक्तिमूल आहोस्विदसद्युक्तिक इति संशयः । किं युक्तम् ? सद्युक्तिमूल इति । तथा हि गुणत्रयात्मकं जगत्प्रधानोपादानकमेव स्यात् । जगतः सुखदुःखमोहमयत्वात् । सुखादीनाञ्च सत्वादिगुणानां कार्यत्वात् । यद्यन्मयं तत्तदुपादानकमेव लोके दृष्टम् । यथा मृण्मयो घटो मृदुपादानक एवेति । एवञ्च सुखदुःख मोहात्मकत्वेन दृश्यमानं सर्वं जगत्सत्वादिगुणत्रयात्मकमेवेति सद्युक्तिकः प्रधानकारणवाद इति प्राप्त आह । रचनानुपपत्तेश्च नानुमानमिति । अनुमानमनुमानसिद्धं प्रधानं न जगतः कारणम् । कुतः ? रचनानुपपत्तेः । अचेतनस्य प्रधानस्य सर्वज्ञत्वसर्वशक्तित्वाभावेन स्रष्टव्यज्ञानतद्रचनाशक्त्यसिद्ध्या विचित्रजगद्रचनानु

पपत्तेः। चकारात्प्रधानस्याचेतनत्वेन जीवैर्जन्मान्तरानुष्ठितयो पुण्य पापयोस्तद्गतबहुत्वाल्पत्वयोश्च ज्ञानमेव न स्यात्। तदभावे च सृष्टि-वैषम्यमपि दु शकम्। आकस्मिकविषमसृष्टौ च सम्पन्नयोर्वैषम्य-नैर्घृण्ययो प्रधान एवापत्ति स्यात्। अतोऽचेतनस्य प्रधानस्य सर्वज्ञ ब्रह्मान्तरेण नोपपद्यते जगदुपादानत्वम् ॥२।२।१॥

## * प्रवृत्तेश्च ॥२।२।२॥

अनुपपत्तेरित्यनुवर्तते। सत्त्वादीनां साम्यावस्था प्रधानमित्यु-च्यते। तत्साम्यावस्थास्पन्दनानन्तरमेव गुण अङ्गाङ्गिभावमासाद्य कार्यं जनयन्तीति साख्यसमय प्रधानस्वतन्त्रकारणत्वे स चानुपपन्न। लोके चेतनानधिष्ठितस्याचेतनस्य प्रवृत्त्यदर्शनात्, चेतनानधिष्ठि-तस्य प्रधानस्य विचित्रजगद्रचनानुरूपाया साम्यावस्थास्पन्दन-रूपाया प्रवृत्तेरनुपपत्तेश्च न प्रधान स्वातन्त्र्येण कारणम् ॥२।२।२॥

## पयोऽम्बुवच्चेत्तत्रापि ॥२।२।३॥

वत्सपानार्थं स्वयमेव क्षीरस्य प्रवृत्तिदर्शनाज्जलस्य स्वयमेव प्रस्रवणदर्शनाच्च प्रधानस्यापि स्वयमेव तद्वत्प्रवृत्तिरुपपद्यत इति चेत् परिहरति तत्रापीति। तत्रापि परमात्मन एव प्रेरकत्वश्रवणात्। "याप्सु तिष्ठन् यस्याप शरीरम् याऽपोऽन्तरो यमयति" (बृ० ३।८।४।) "यस्य सर्वाणि भूतानि शरीरम् य सर्वाणि भूतान्यन्तरो यमयति" (बृ० ३।७।१५) इत्यादिश्रुतय परमपुरुषस्यैव तत्र तत्र नियामक त्वमभिदधते ॥ २।२।३ ॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥२।२।४॥

"व्यक्ताव्यक्तज्ञविज्ञानादिति" साख्यवचनात् "तद्धेदं तर्ह्य-व्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत" इति श्रुतेश्चाव्याकृतनाम-

* इद सूत्र श्रीभाष्ये नास्ति। विद्यते च निम्बार्कभाष्ये शाङ्करभाष्ये च।

रूपस्य कृत्स्नस्य प्रधानस्य व्याकृतनामरूपात्मकव्यक्तशब्दवाच्यनाम रूपत्वावगमात्स्वतन्त्रस्य प्रधानस्य कारणत्वे तस्य कार्यव्यतिरेकेणानवस्थितेरवस्थितेरभावप्रसङ्गात्। ननु ब्रह्मशब्दवाच्यस्य पुरुषस्य कार्यव्यतिरेकेण कारणतयाऽवस्थितिरस्त्विरयाशङ्कयाह "अनपेक्षत्वात्" "न प्रकृतिर्न विकृति पुरुष" ( सा० का० ) इति साङ्ख्ये पुरुषस्य कारणत्वकार्यत्वयोरुभयार्निषेधेन प्रधानस्य कार्यरचनाया चेतनसह कारित्वानपेक्षत्वादनभ्युपगमादित्यर्थ । तस्मान्न प्रधानस्य स्वात न्त्र्येण जगत्कारणत्वमुपपद्यते। ब्रह्मण कारणत्वे तु "पादोऽस्य विश्वाभूतानि त्रिपादस्यामृत दिवि" "अत्यतिष्ठद्दशाङ्गुलम्" इत्ये वमादिश्रुतिभ्य "विष्टभ्याहमिदकृत्स्नमेकांशेन स्थितो जगत्" इति स्मृतेश्च ब्रह्मण पादांशमात्रेण जगदुपादानत्वावगमादवशि ष्टस्य कार्यव्यतिरेकेणावस्थितेर्नोक्तदोषावकाश इति ॥२।२।४॥

## अन्यत्राभावाच्च न तृणादिवत् ॥२।२।५॥

यथा धेन्वादिभक्षित तृणादिक स्वयमेव क्षीराकारेण परिणमते तथा प्रधानमपि स्वय जगदाकारेण परिणमते इति चेन्न। तत्र तृणादे क्षीराकारपरिणामे परमेश्वरस्य हेतुत्वात् । अन्यथा बलीवर्दा दिभुक्तस्यापि तृणाद क्षाराकारेण परिणाम स्यादित्याह अन्यत्रा भावाच्चेति। अन्यत्रानडुहादो भुक्तस्य तृणादे क्षीराकारेण परिणा माभावात् गोमयाद्याकारेण परिणामस्य दर्शनाच्च ॥२।२।५॥

## अभ्युपगमेऽप्यर्थाभावात् ॥२।२।६॥

प्रधानस्य स्वत प्रवृत्त्यभ्युपगमेपि प्रयोजनाभावान्न तत्प्रवृत्ति रुपपद्यत इत्यर्थ । तथा हि, प्रधानस्य प्रवृत्ति स्वार्था वा पुरुषस्य भोगार्था वा तन्मोक्षार्था वा ? नाद्य । प्रधानस्याचेतनत्वेनापेक्षा भावात्। न द्वितीय । भोग्यानामानन्त्यादनिर्मोक्षप्रसङ्गात्। नापि

हृतीय । भोगाभावप्रसङ्गात् । प्रधानस्याप्रवृत्तिप्रसङ्गाच्च । तदेव प्रयोजनाभावात्तत्प्रवृत्त्यनुपपत्तेर्न प्रधानस्य स्वातन्त्र्येण जगत्कारण त्वम् ॥२।२।६॥

## पुरुषाश्मवदिति चेत्तथापि ॥२।२।७॥

अचेतनमपि प्रधान चेतन पुरुषो निष्क्रियोऽपि स्वसन्निधान मात्रेण सर्गादौ प्रवर्तयति यथा सचक्षु पङ्गु पुरुषोऽन्धमपङ्गुम्प्रवर्त यति । यथा वायस्कान्ताश्मा स्वसन्निधानमात्रेणाय प्रवर्तयति तद्व दिति चेत् परिहरति । तथापीति । तथापि दोषसद्भावात् । तथा हि प्रधानस्य पुरुषप्रवर्त्यत्वे तत्स्वातन्त्र्यहानि । पुरुषस्य प्रवर्तकत्वे तस्यौदासीन्याकर्तृत्वयोर्भङ्ग । तस्य स्वव्यापारमन्तरेण प्रवर्तकत्वा नुपपत्ते । अयस्कान्तस्याय सान्निध्यव्यापारस्तु कादाचित्कत्वेनानित्य इति दृष्टान्तासिद्धे । प्रकृतिपुरुषयोर्नित्यत्वेन तत्ससर्गस्यापि नित्यत्वात्सृष्टे सार्वदिकत्वेन मोक्षाभावप्रसङ्ग ॥२।२।७॥

## अङ्गित्वानुपपत्तेश्च ॥२।२।८॥

गुणत्रयसाम्यावस्था हि प्रकृति तस्या कूटस्थत्वपक्षे गुणानाम ङ्गाङ्गिभावानुपपत्ते सृष्टिप्रवृत्त्यभाव । कुत ? गुणानामचेतनत्वेन कूटस्थतयाऽन्योन्यनिरपेक्षत्वेन तत्साम्यावस्थाप्रच्युतेरभावात् । कथ ञ्चित् तेषा प्रच्युतिस्वीकारे कौटस्थ्यहानि । प्रकृतेर्विकारित्वे तु स्वत साम्यावस्थाया प्रच्यवस्वीकारेण सर्वदा सृष्टिप्रसङ्ग । न च पुरुषसन्निधानादेव साम्यावस्थाभङ्ग इति वाच्यम् । तस्यौदासी न्यादकर्तृत्वाच्च । सन्निधिमात्रेण कार्यसत्त्वे तु प्रकृतिपुरुषयोरुभयो रपि नित्यत्वात्सर्वदा सान्निध्ये शश्वत्सृष्टिप्रसङ्ग । तस्मात्तत्प्रच्युत्य- सिद्धयातदङ्गाङ्गिभावानुपपत्ते सृष्ट्यभावाद्यनेकदोषापत्त्या न प्रधा नस्य जगत्कारणत्वमुपपद्यते ॥२।२।८॥

## अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥२॥२॥९॥

इद जगत्त्रिगुणात्मककारणक भवितुमर्हति, त्रिगुणमयत्वात्। यद् यन्मय भवति तत् तस्य कार्यं भवति । यथा मृण्मय घटादिक मृद कार्यं भवतीत्यन्यथानुमितौ जगत्सृष्टेर्गुणानामङ्गाङ्गिभाव विना नुपपत्त्या तदङ्गाङ्गिसभवाज्जगदुत्पत्ति सभवतीति चेन्न । कुत ? ज्ञशक्तिवियोगात् । गुणाना ज्ञानशक्तिसयोगरहितत्वात् । एतदुक्त म्भवति । गुणाना स्वत साम्यावस्थात प्रच्यवो निमित्तान्तरेण वा । न तत्राद्य । सर्वदा वैषम्यप्रसङ्गात् साम्यावस्थाया एवाभाव प्रसङ्गात् । न द्वितीय । निमित्तान्तरस्य तदानीमसत्वात् । तस्मान्न प्रधानस्य स्वातन्त्र्येण कारणत्वम् ॥२।२।९॥

## विप्रतिषेधाच्चासमञ्जसम् ॥२।२।१०॥

साङ्ख्या हि प्रकृते परार्थत्वेन पुरुषो द्रष्टाभोक्ताधिष्ठाता चेत्याहु । पुन पुरुषश्चैतन्यमात्रवपुर्नित्यो निर्विकारो न द्रष्टा न भोक्ता न कर्तेति चाहु । पुनस्तस्यैव चैतन्यमात्रवपुषो निष्क्रियस्य नित्यस्य निर्वि कारस्येतरेतराध्यासकृतप्रकृतिदर्शनरूपो भोगस्तद्विवेकरूपो मोक्ष श्चेति तथा परस्परविरुद्धभाषणात्, तथा क्वचिन्महतस्तन्मात्रासर्गं क्वचिच्चाहङ्कारात् तत्सर्गं क्वचिदेकादशेन्द्रियाणि क्वचित्त्वगिन्द्रिये ज्ञानेन्द्रियाण्यन्तर्भाव्यैक त्वगिन्द्रिय पञ्चकर्मेन्द्रियाणि मनश्चेति सप्तेन्द्रियाण्याहुरित्येवमन्योन्यप्रतिषेधात्तेषा दर्शनमसमञ्जसम् ॥ २।२।१० ॥

*इति रचनानुपपत्यधिकरणम् ।*

---

( अथ महद्दीर्घाधिकरणम् । )

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥२।२।११॥

एवं प्राधानिकवादं समालोच्य परमाणुकारणवादः समालोच्यते। तत्राय संशय। किम्परमाणुकारणवादस्य सामञ्जस्यमाहो स्विदसामञ्जस्यम्? तत्र सामञ्जस्यमिति पूर्वं पक्ष। कुत? अवयवेभ्योऽवयव्युत्पत्त्यङ्गीकारात्। सर्षपमेरुपर्वतादिवैषम्यस्यात्पावयवबह्ववयवकृतत्वदर्शनाच्चावयवाल्पत्वकाष्ठा परमाणुरिति परमाणुसिद्धि। ते च परमाणवो द्व्यणुकाद्युत्पादनक्रमेणाखिल ब्रह्माण्ड जनयन्तीतिप्राप्ते सिद्धान्तमाह महद्दीर्घवदिति। असमञ्जसमित्यनुवर्तते। वाशब्दश्चार्थक। ह्रस्वपरिमण्डलाभ्या द्व्यणुकपरमाणुभ्या महद्दीर्घवत् त्र्यणुकद्व्यणुकोत्पत्तिवदन्यत्सर्वं च तदभ्युपगतमसमञ्जसम्। तत्र काणादा द्वयो परमाण्वो सयोगात् द्व्यणुक जायते त्रयाणा द्व्यणुकाना सयोगात् त्र्यणुकमुत्पद्यते। एव चतुरणुकादिकमपि ज्ञेयम्। तत्र परिमण्डलात् द्व्यणुकमणु जायते परिमण्डलगत पारिमाण्डल्यन्तु न द्व्यणुके पारिमाण्डल्यपरिमाणञ्जनयति। किन्तु परमाणुसमवेतद्वित्वसख्यैव द्व्यणुकेऽणुत्वमारभत। एव द्व्यणुकगतह्रस्वाणुत्वे परिमाणे त्र्यणुके स्वसमानजातीये ह्रस्वत्वाणुत्वे नारभेते अपि तु द्व्यणुकगतत्रित्वसख्यैव महत्त्वदीर्घत्व आरभत इति वदन्ति।

तदेतदसमञ्जसम्। यथा कारणभूता अवयवा सयुज्यमाना अवयविनं कार्यरूप महान्त जनयन्ति तथाऽवयवगते ह्रस्वत्वाणुत्व परिमाणे सयुज्यमाना अवयविनि महत्त्वदीर्घत्वपरिमाणे किन्न जनयत। यथा वावयवाना बहुत्वे तदवयविकार्यं बृहज्जायते तथा वयवपरिमाणबहुत्वेऽवयविपरिमाणमपि महद्दीर्घं वा जायताम्। त्रित्वसख्यायास्त्र्यणुकगतमहत्परिमाणकारणत्वकल्पनस्यान्याय्यत्वाच्च।

विञ्च जगत्कारणत्वेन स्वीकृतानां परमाणूनामपि जडत्वेन चेतनाधिष्ठितिमन्तरेण कार्योत्पादकत्वानुपपत्तेः। परमाणुसमूहभूताना पृथिव्यादीनाञ्च "तस्माद्वा एतस्मादात्मन आकाश. सम्भूत." ( तै० २।१ ) इत्येवमादिसृष्टिवाक्येषु परमात्मनः एवोत्पत्ते. श्रवणाच्च परमाणुकारणवादस्य स्पष्टमसामञ्जस्यं श्रुत्यमूलकत्वञ्च ॥२।१।११॥

## उभयथापि न कर्मातस्तदभावः ॥२।२।१२॥

सृष्टे पूर्वं निश्चलयो परमाण्वो. कर्मणान्योन्यसंयोगेन द्व्यणुकाद्युत्पत्तिं वदन्ति वैशेषिका.। तत्कर्माऽदृष्टकारितम्। तददृष्टमणुगत जीवगत वा ? नाद्य पक्ष.। अणोरचेतनत्वेन कर्मकर्तृत्वानुपपत्त्या दृष्टस्य तद्गतत्वानुपपत्ते.। द्वितीये, जीवगतादृष्टस्य तन्नामरूपव्याकृतिद्वारा तत्पुण्यपापकर्मफलसुखदु खभोगहेतुत्व श्रवणाददृष्टपरमाण्वादिकर्मकारयितृत्वानुपपत्तेरित्युभयथापि न कर्म। कर्माभावात्तदभावो द्व्यणुकाद्युत्पत्तिक्रमेण जगत्सृष्ट्यभाव ॥२।२।१२॥

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥२।२।१३॥

तदभाव इत्यनुपज्यते। तस्य परमाणुकारणवादस्याभाव इत्यर्थ। असम्भव इति यावत्। कुत. ? समवायस्य द्रव्यगुण कर्मसामान्यविशेषाभावेभ्य. पृथक्पदार्थत्वेन वैशेषिकैरङ्गीकारात्। कार्यकारणयोः समवायसम्बन्धत्वस्वीकाराच्च। साम्यादनवस्थिते.। कारणकार्याभ्या परमाणुद्व्यणुकाभ्या समवायिभ्यामत्यन्तभिन्न समवाय. केन सम्बन्धेन समवायिभ्या परमाणुद्व्यणुकाभ्यां सम्बध्येत। भिन्नत्वसामान्यात्। समवायिभ्यामसम्बद्धस्य सम्बन्धत्वानुपपत्तेः। ततश्च समवायस्यापि समवायिभ्यां भिन्नत्वसामान्यात् सम्बन्धान्तरेण तत्सम्बन्धत्वानुपपत्ते'। स समवायः समवायान्तरेण

समवायिभ्यां सम्बध्यत इत्यवश्य वक्तव्यं ततश्च सोपि समवाय केन सम्बध्यत इत्यपेक्षाया समवायान्तरेण सोपि समवायान्तरेणे त्यन्ताभावेनानवस्थारूपदोषप्रसक्ते । कार्यकारणयो स्वाभाविक स्वरूपसम्बन्धत्वाङ्गीकारे समवायस्य लोपप्रसङ्गात् । ततश्च समवायासिद्धया समवायित्वासिद्धेर्द्व्यणुकाद्युत्पत्यभावेन जगद्रचनासिद्धे परमाणुकारणवादस्यासिद्धि ॥२।२।१३॥

## नित्यमेव च भावात् ॥२।२।१४॥

समवायो नित्य इतिचेत्तर्हि समवायिनो परमाणुद्व्यणुकयोर्नित्यत्व विना समवायस्य नित्यत्वानुपपत्ते । समवायिनो परमाणु द्व्यणुकयोर्द्वयोरपि नित्यमेव भावात्तयो कार्यकारणभावासिद्धे परमाणुकारणवादासिद्धि ॥२।२।१४॥

## रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥२।२।१५॥

वैशेषिका हि परमाणूनामणुत्व नित्यत्त्व रूपस्पर्शादिमत्वञ्च मन्यन्ते । तेषाञ्च परस्परविरुद्धत्वात्तन्मननमसङ्गतम् । कुत ? रूपस्पर्शादिमत्वविरोधेन परमाणूनामणुत्वनित्यत्वयोर्विपर्यय । अणुत्वस्य नित्यत्वस्य विपर्यय स्थूलत्वमनित्यत्वञ्चेति बोध्यम् । तथा हि जगत्कारणत्वेन स्वीकृताना परमाणूनामणुत्वनित्यत्वविपर्यय स्थूलत्वमनित्यत्वञ्च भवितुमर्हति । तेषा रूपादिमत्वात् । यद्यद्रूपादिमत् तत्तत्स्थूलमनित्यञ्च लोके दृष्टम् । रूपादिमत पटादे स्थूलत्वानित्यत्वयोर्दर्शनात् । तस्मान्न परमाणुकारणवादस्य सामञ्जस्यम् । २।२।१५॥

## उभयथा च दोषात् ॥२।२।१६॥

परमाणूना रूपादिमत्त्वपक्षे तत्र स्थूलत्वानित्यत्वप्रसक्ति । तेषां रूपादिरहितत्वपक्षे रूपादिमता त्र्यणुकादीना पृथिव्यादीनाञ्च

तत्कार्यत्वासिद्धिः। अपरपरमाणुगुणानां रूपादीनां पृथिव्यादिषु दर्शनात्। कार्यगुणस्य कारणगुणपूर्वकत्वमिति हि तन्नयस्तथा चोभयथा दोषादनुपपन्नः परमाणुकारणवादः ॥२।२।१६॥

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥२।२।१७॥

सांख्यतन्त्रस्य सत्कार्यत्वाद्यंशेन शिष्टैर्मन्वादिभिः परिगृहीतत्वात् परमाणुकारणवादस्य तु केनचिदप्यंशेन कैश्चिदपि शिष्टैरपरिगृहीतत्वादनुपपन्नत्वाच्चात्यन्तमनपेक्षा कार्या परमाणुकारणवादे मुमुक्षुभिरिति ॥२।२।१७॥

*इति महद्दीर्घाधिकरणम् ।*

---

*अथ समुदायाधिकरणम् ।*

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥२।२।१८॥

वैशेषिका आत्मनः स्थायित्वं मन्यन्ते देहादेराशुतरविनाशित्वं चेत्यतोऽर्धवैनाशिकाः। सर्वक्षणिकत्ववादिनो बुद्धमुनिशिष्यास्तु वैभाषिक-सौत्रान्तिक-विज्ञानवादि-सर्वशून्यवाद्याख्याः पूर्णवैनाशिकाः। तत्र वैभाषिका ज्ञानं तद्भिन्नपदार्थाश्च सर्वे क्षणिकाः सत्याः प्रत्यक्षग्राह्याश्चेति मन्यन्ते। सौत्रान्तिकाः सर्वे पदार्थाः क्षणिका अनुमेयाश्चेति मन्यन्ते। विज्ञानवादिनः (योगाचाराः) सर्वे पदार्था विज्ञाने कल्पिता इति मन्यन्ते। शून्यवादिनः (माध्यमिकाः) सर्वं ※ शून्यमिति मन्यन्ते। एते पूर्णवैनाशिका

---

※ न सन्नासन्न सदसन्न चाप्यनुभयात्मकम्। चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥ इति वचनानुसारेण निर्वचनीयार्थकोऽहि शून्यशब्दः। परमतत्त्वस्य वाङ्मनसयोरगोचरतया तत्र शून्यशब्द व्यवहारः।

उच्यन्ते । अर्धवैनाशिकमतं निरस्य पूर्णवैनाशिकमतनिरा समुपक्रमते । सौगतमते पृथिव्यादिबाह्यसमुदायः परमाणुहेतुकः । आध्यात्मिकसमुदायः पञ्चस्कन्धहेतुकः । रूपवेदना संज्ञासंस्कार भेदेन स्कन्धाः पञ्च । तेषु विज्ञानस्कन्धश्चित्तमित्यात्मेत्युच्यते । अन्ये स्कन्धाश्चित्तप्रभवत्वाच्चैत्ता इत्युच्यन्ते । एवं च स्कन्ध पञ्चकाज्जगज्जायते । उक्ताभ्यामुभाभ्यां समुदायाभ्यां जगदुत्पद्यते इति तन्मतनिष्कर्षः । तन्निराक्रियते "समुदाय उभयहेतुकेऽपि तदप्राप्तिः" इति । परमाणुहेतुके पृथिव्यादिभूतात्मके बाह्यसमुदाये, स्कन्धहेतुके शरीरेन्द्रियविषयरूपाध्यात्मिकसमुदाये चेत्युभयहेतुकेऽपि समुदाये तदप्राप्तिस्तस्य जगदात्मकः समुदायस्याप्राप्तिः । परमाणूनां स्कन्धानां चाचेतनत्वेन चेतनपरमात्मप्रेरणां विना तत्समुदायत्वानुपपत्तेः । तत्समुदायकर्तुश्चेतनस्यानभ्युपगमाच्च । एवं च सर्वकारणानां परमाणूनामचेतनत्वेन परस्परसंहति हेतुकव्यापारानुपपत्तेस्तेषां क्षणविनाशित्वेन संघातानुपपत्तेश्च न कथञ्चिदपि तेभ्यस्तत्समुदायात्मकं जगदुत्पत्तिरुपपद्यते ॥२।२।१८॥

## इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघातभावानिमित्तत्वात् ॥२।२।१९॥

कार्यं प्रत्ययते व्याप्नोतीति व्युत्पत्त्या प्रत्ययशब्दः कारण वाचकः । अविद्या संस्कारो विज्ञानं नाम रूपं षडायतनं स्पर्शो वेदनेत्येवं जातीयकानामविद्यादीनामितरेतरप्रत्ययत्वादितरेतरकारणत्वाद् घटीयन्त्रवत् सततमावर्तमानानामविद्यादीनामर्थान्निमित्त मात्रेण संघात उपपद्यते । एतदुक्तं भवति । क्षणिकेष्वपि सर्वेषु भावेषु येयमविद्याऽस्थिरेषु स्थिरत्वबुद्धिरूपा तया चेतदुपपन्नं स्यादेवेति चेन्न, नह्यविद्यया समुदायः शक्यते समुत्पादयितुम् । तस्या संघातभावस्यानिमित्तत्वात् । विपरीतार्थग्राहिकयाऽविद्यया

नहि वास्तविकं कार्यं शक्यते जनयितुम्। शुक्तिरजतादिषु तथाऽदर्शनात् ॥२।२।१९॥

## उत्तरोत्पादे च पूर्वनिरोधात् ॥२।२।२०॥

घटादौ कार्ये कारणस्य मृदादेर्विद्यमानत्वं दृश्यते न तु तन्नाशः। तन्नाशे तस्य घटादिकारणत्वं नोपपद्येत। भवद्भिस्तूत्तरस्य कार्यस्योत्पादे उत्पत्तिकाले पूर्वस्य कारणस्य मृदादेर्निरोधान्नाशाङ्गीकारान्मृदाद्यभावे घटाद्युत्पत्त्यभावप्रसङ्गात्। कारणानां मृदादीनां विनाशक्षण एव तद्रूपाणां घटादीनां विनाशप्रसङ्गादित्यर्थः। कारणस्य पूर्वक्षणे विनाशात् तत्क्षण एव तद्विकारभूतस्य कार्यस्य नाशाच्च कार्यकारणयोरुभयोरभावे शून्यस्यैवावशेषाद्वृथैवाविद्यासंस्कारादिद्वारा जगदुत्पत्तिकल्पना ॥२।२।२०॥

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥२।२।२१॥

असति कारणे कार्योत्पत्त्यङ्गीकारेऽविद्यासंस्कारादीनां कारणत्वकार्यत्वकल्पनारूपायाः प्रतिज्ञाया उपरोधः स्यात्। अन्यथा कार्योत्पत्तिकालपर्यन्तं कारणं तिष्ठतीत्यङ्गीकारे कार्यकारणयोर्यौगपद्यम् एकस्मिन्काले स्थितिप्रसङ्गश्च। कार्योत्पत्तिपूर्वक्षणे कारणस्य विद्यमानात्कार्योत्पादनकालस्य द्वित्रिक्षणत्वोपपत्तेः क्षणिकत्वप्रतिज्ञाहानिः स्यादित्युभयतः पाशरज्जुः ॥२।२।२१॥

## प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॥२।२।२२॥

वैनाशिका भावानां बुद्धिपूर्वकमबुद्धिपूर्वकं विनाशमाकाशं चेति त्रयमप्यवस्तवभावमात्रं निरुपाख्यं निर्हेतुकं तुच्छं मन्यन्ते। तत्र सन्तं घटमसन्तं करोमीत्याकारिका बुद्धिः प्रतिसङ्ख्येत्युच्यते। प्रतिकूला सङ्ख्या प्रतिसङ्ख्या। सङ्ख्या ख्यातिः। तत्पूर्वको निरोधः पदार्थनाशः प्रतिसङ्ख्यानिरोधः। अतत्पूर्वको निरोधोऽप्रतिसङ्ख्या

निरोध. । आवरणाभावमात्रमाकाशमिति वदन्ति । तयोर्द्वयोर्निरोधयो. सन्तानिषु घटादिषु सन्ताने मृदादौ घटादिकारणे वाप्राप्ति प्राप्त्यसभव. । तयो कार्यकारणयोर्निरन्वयविनाशासम्भव । कुत ? अविच्छेदात् । उत्पत्तिविनाशधर्मभागिनो मृदादिद्रव्यस्याविच्छेदात् । किं च सन्तानिनां घटादीना क्षणिकत्वाद् बुद्धिपूर्वको नाशो नोपपद्यते । तदभ्युपगतोबुद्धिपूर्वकोपि समूलनाशो नोपपद्यते । मूलस्य मृदादे' प्रत्यभिज्ञायमानत्वात् । तस्मादुक्तनिरोधयोरसिद्धि ॥२।२।२२॥

## उभयथा च दोषात् ॥२।२।२३॥

बुद्धिपूर्वकमबुद्धिपूर्वक च भावाना नाशस्यावस्तुत्वनिरुपारयत्वनिर्हेतुकत्वतुच्छत्वस्वीकारे घटादेर्वस्तुतस्तत्पूर्वकनाशासम्भवात् । भावविनाशस्यावस्तुत्वे तुच्छत्वे शशशृङ्गस्य कालत्रयेप्यभाववद्भावनाशस्यापि कालत्रये सत्यत्वानुपपत्त्या भावनाशाभाव प्रसङ्गात् । तत्पूर्वकभावनाशस्य वस्तुत्वादिस्वीकारे तदवस्तुत्वनिरुपाख्यत्वनिर्हेतुकत्वतुच्छत्ववादस्य हानिप्रसङ्गादित्युभयथापि दोषादसङ्गतं सौगतमतमित्यर्थ ॥२।२।२३॥

## आकाशे चाविशेषात् ॥२।२।२४॥

आत्मन आकाशः संभूत इति श्रुतेराकाशस्याप्यात्मजन्यत्वेन तज्जन्यपृथिव्यादिवद् वस्तुत्वरूपादिमत्त्वाबाधितत्वप्रतीतेरविशेषान्न तस्यापि निरुपाख्यत्व तुच्छत्व चेत्यर्थः ॥२।२।२४॥

## अनुस्मृतेश्च ॥२।२।२५॥

पुन. क्षणिकत्वनिराश एव युक्त्यन्तर दर्शयति। अनु दर्शनादनन्तर स्मृतिरनुस्मृतिस्तस्या अनुस्मृतेश्च बलात्समतुरात्मनः क्षणिकत्वं नोपपद्यते । अन्यदृष्टस्यान्येन स्मरणानुपपत्तेः ॥२।२।२५॥

## नासतोऽदृष्टत्वात् ॥२।२।२६॥

पूर्वस्य क्षणिकत्वेन विनष्टत्वात्तदभावान्निरुपाख्यात्कार्योत्पत्तिर्न सम्भवति। कुत ? असत शशविषाणादे कार्योत्पत्तेरदृष्टत्वात्। अथवा दृष्टत्वादितिच्छेद । सत एव मृदादे घटादिकार्योत्पत्त दृष्टत्वादित्यर्थ ॥२।२।२६॥

## उदासीनानामपि चैवं सिद्धिः ॥२।२।२७॥

एवमसतोऽभावाद्भावोत्पत्त्यङ्गीकारे केषाञ्चिदुदासीनाना तूष्णीमुपविष्टाना लौकिकवैदिकव्यापारेषु कृषियज्ञादिषु प्रवृत्ति रहितानामपि स्वाभीष्टस्यैहिकामुष्मिकस्य सर्वार्थस्य सिद्धि स्यात्त स्माद्बाह्यार्थस्य क्षणिकत्वानुमेयत्ववादिनोर्वैभाषिकसौत्रान्तिकयो र्मतस्य भ्रान्त्यैकमूलत्वादसामञ्जस्यमिति ॥२।२।२७॥

इति समुदायाधिकरणम्।

---

*अथोपलब्ध्यधिकरणम्।*

## नाभाव उपलब्धेः ॥२।२।२८॥

निरुक्तेनाधिकरणेन बाह्यार्थक्षणिकत्ववादिमत निरस्य विज्ञाना तिरिक्त किञ्चिन्नास्तीतिविज्ञानवादिनो योगाचारस्य मतमपाक्रि यते। तद्योगाचारमत समीचीनयुक्तिमूलमाहोस्विद्भ्रान्तिमूलमिति सशये समीचीन युक्तिमूलमिति पूर्व पक्ष। कुत ? बाह्यार्थास्तित्व वादिनापि तत्तद्ज्ञानेनैव विषयव्यवस्था तत्पार्थक्यञ्चाभ्युपेयम्। तथा चावश्यस्वीकरणीयविज्ञानेनैवेष्टसिद्धावर्थाङ्गीकारस्यायुक्तत्वात्। घटपटाद्योऽर्थाश्च विज्ञानस्यैवाकारभेदा। वासनावशाज्ज्ञानस्यैव तथा सन्तान। नीलपीताद्याकाराणामपोहरूपत्वाद्विज्ञान एवाहि

तसत्कारत्वेनाखिलविषयकवित्तेरुपपत्तेस्तदतिरिक्तपदार्थसद्भावस्यानुपपत्ते । इति प्राप्तेऽभिधीयते । नाभाव उपलब्धेरिति । विज्ञानातिरिक्तानामर्थानामभावो नोपपद्यते । कुत ? उपलब्धे । घटपटादिकमह जानामीति घटादिविषयकज्ञानकर्तॄणा पुरुषाणा तज्ज्ञेयभूताना घटपटादीनामर्थाना च विज्ञानात्करणभूतात्पृथक्त्वेयोपलब्धे । न च विज्ञानाकारेण पदार्थानां भानानुपपत्तिरिति वाच्यम् । घटादिसारुप्य प्राप्तस्य विज्ञानस्य तत्स्वरूपाकारेणैव भासमानत्वात् । अन्यथा घटादिपदार्थसद्भाव विना तत्तदाकारेण तत्तद्भानानुपपत्ते । किञ्च यदि विज्ञानातिरिक्त कश्चित्पदार्थ एव न स्यात्तर्हि कस्य किमर्थं विज्ञान नीलाद्याकारतामुपयातीति वक्तव्यम् । नहि विज्ञानमेव स्वय स्वार्थं तत्तद्रूपतामुपैति । प्रयोजनाभावात् ॥२।२।२८॥

## वैधर्म्याच्च न स्वप्नादिवत् ॥२॥२॥२९॥

स्वप्नज्ञानदृष्टान्तेन जागरितज्ञानस्य निरालम्बनत्व न शक्यते वक्तुम् । कुत ? वैधर्म्यात् । स्वप्नादिज्ञानस्य मन कल्पनामात्रत्वेन बाधितविषयत्वाज्जागरितज्ञानस्य तु प्रत्यक्षप्रमाणजन्यत्वेनाबाधितविषयत्वादित्युभयोर्ज्ञानयोर्वैधर्म्यात् । चकाराद्दृष्टान्तभूतस्वप्नप्रत्ययोऽपि न सर्वथा मिथ्याभूत कचित्तस्यापि साफल्यदर्शनात् ॥२।२।२९॥

## न भावोऽनुपलब्धेः ॥२।२।३०॥

बाह्यार्थाना घटादीनामभावे केवलस्यार्थविहीनस्य ज्ञानस्य भावो नोपपद्यते । कुत ? अनुपलब्धे । प्रत्यक्षसिद्धस्य विषयस्याभावेऽप्रत्यक्षस्य विषयिणो ज्ञानस्याप्यनुपलब्धे । विषयिणो विषयपदार्थनिरूपितत्वेनैकस्याभावेऽपरस्याप्यभावत्वनिष्पत्तेर्न ज्ञानोपलब्धि स्यादिति ॥२।२।३०॥

## क्षणिकत्वाच्च ॥२।२।३१॥

आलय विज्ञानस्यापि क्षणिकत्वाभ्युपगमात् क्षणान्तरे तस्यापि विनाशान्त तद्भावः। आलयविज्ञानस्य भावः स्थितिर्नास्तीत्यर्थो नोपपद्यत इत्यर्थः ॥२।२।३१॥

*इत्युपलब्ध्यधिकरणम् ।*

---

*अथ सर्वथानुपपत्त्याधिकरणम् ।*

## सर्वथानुपपत्तेश्च ॥२।२।३२॥

दर्शनमित्यस्य स्थाने 'पश्यना' स्थानमिति वक्तव्ये 'तिष्ठना' इति चापशब्दप्रयोगाद् ग्रन्थतोनुपपन्नमुक्तप्रकारेणार्थतोप्यनुपपन्नमिति सर्वथानुपपत्तेर्दूरतोनादरणीयमिदं सर्वथा वेदबाह्यं सौगतमतमिति ॥२।२।३२॥

*इति सर्वथानुपपत्त्यधिकरणम् ।*

---

( *अथैकस्मिन्नसम्भवाधिकरणम् ।* )

## नैकस्मिन्नसम्भवात् ॥२।२।३३॥

सौगतसमयनिरासानन्तर विवसनानामार्हतानां मतमपाक्रियते तत्र दिगम्बरमतं सद्युक्तिमूलमाहोस्विदसद्युक्तिकमिति संशये सद्युक्तिकमिति पूर्वं पक्षः। तथा हि जीवाजीवास्रवसंवरनिर्जरबंधमोक्षाख्याः सप्त पदार्था आर्हतमतसिद्धाः। तत्र जीवः कायपरिमाणकश्चेतनो भोक्ता। अजीवो भोग्यवर्गः। विषयेष्विन्द्रियप्रवृत्तिरास्रवः। संवृणोतीन्द्रियचापल्यमिति संवरो यमनियमादिः। निर्जर-

स्तपस्तप्तशिलारोहणादिरूपम् । बन्धपदेन तद्धेतुभूतं कर्मोच्यते । मोक्षः कर्मोच्छित्तिः । एवमणुव्यतिरिक्तद्रव्याणामस्तिकायपदेन ग्रहणम् । तेषां च पञ्चभेदाः जीवधर्माधर्मपुद्गलाकाशास्तिकाया इत्येतेषामवान्तरानन्तभेदा आर्हतदर्शने प्रदर्शिताः । तेषां सर्वेषां सप्तभङ्गीन्यायेन व्यवस्थितिः क्रियते । स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यं, स्यादस्ति चावक्तव्यम्, स्यान्नास्ति चावक्तव्यं, स्यादस्ति नास्ति चावक्तव्यमिति तत्स्वरूपम् । एकस्यैव पदार्थस्य कथञ्चिदवस्थाभेदेन देशादिभेदेन च सत्वं तस्यैव च प्रकारान्तरेणासत्वम् । एवमेव सर्वत्रानैकान्त्येन पर्यवस्थानमिति । अत्रोच्यते–नैकस्मिन्नसम्भवादिति । न युक्तोऽनेकान्तवादो जैनानामिति । कुतः ? एकस्मिन् वस्तुनि नित्यत्वानित्यत्वसत्त्वासत्त्ववक्तव्यत्वावक्तव्यत्वादीनां परस्परविरुद्धानां धर्माणामसम्भवात् । तस्मादसङ्गतमयुक्तञ्च जैनदर्शनम् ॥२।२।३३॥

## एवं चात्माकार्त्स्न्यम् ॥२।२।३४॥

यथैषां मते विरुद्धधर्मावस्थानमेकस्मिन् वस्तुनि न सम्भवति । एवमात्मनोऽकार्त्स्न्यस्याप्यसम्भवः । आत्मनो देहपरिमाणत्वे कर्मवशान्मनुष्यात्मनो मशकादिक्षुद्रजन्तुशरीरे कृत्स्नस्य प्रवेशानुपपत्तेः । अकार्त्स्न्यमपरिपूर्णत्वं प्रसज्यते तदानीमल्पपरिमाणत्वात् । अल्पशरीरकमशकाद्यात्मनश्च गजादिकृत्स्नशरीरप्रवेशानुपपत्तेश्चासङ्गतमार्हतमतम् ॥२।२।३४॥

## न च पर्य्यायादप्यविरोधो विकारादिभ्यः ॥२।२।३५॥

न चैवं पर्यायपदवाच्यसंकोचविकाशाश्रयतयात्मनोऽवस्थाभेदाङ्गीकारेणापि विरोधपरिहारः । आत्मनः संकोचविकासधर्मवत्त्वे तत्र विकारित्वादिदोषप्रसङ्गात् । विकारित्वे सत्यनित्यत्वापत्त्या तद्बन्धमोक्षाभ्युपगमस्य बाधात् ॥२।२।३५॥

## अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥२।२।३६॥

अन्त्यं मोक्षावस्थस्यात्मनो यत्परिमाण, तस्यैव स्वाभाविकस्य नित्यस्य बद्धमोक्षावस्थायामप्यवस्थित्युपपत्तेरित्यात्मतत्त्वरिमाण-योरुभयोरुभयावस्थायामपि नित्यत्वादविशेषान्न्यूनाधिकभावा-नुपपत्तेर्नात्मनः शरीरपरिमाणकत्वमुपपद्यते । तस्मादसमञ्जसमेव विवसनदर्शनम् ॥२।२।३६॥

*इत्येकस्मिन्नसम्भवाधिकरणम् ।*

---

*अथ पत्याधिकरणम् ।*

## पत्युरसामञ्जस्यात् ॥२।२।३७॥

'नैकस्मिन्नसंभवात्' इति सूत्रान्तेत्यनुवर्तते । पत्युः पशुपतेर्मतं नादरणीयम् । कुत ? वेदविरुद्धाचारबोधकत्वेनासामञ्जस्यात् । वेदविरुद्धाचरण तु निमित्तोपादानभेदाभिधानं पशुपतेर्निमित्त-कारणत्वाभिधानं मुद्रिकापट्कधारणं भगासनस्थात्मध्यानं कपाल-पात्रभोजनं शवभस्मस्नानं सुराकुम्भस्थापनं तदाधारदेवपूजादिकं ज्ञेयम् ॥२।२।३७॥

## सम्बन्धानुपपत्तेश्च ॥२।२।३८॥

कुतो वेदविरुद्धानि तद्वचनानीत्याह–सम्बन्धानुपपत्तेश्च । वेदवाक्यैः पशुपतिवाक्यानां सम्बन्धानुपपत्ते' ॥२।२।३८॥

## अधिष्ठानानुपपत्तेश्च ॥२।२।३९॥

सशरीराणां कुलालादीनामधिष्ठानमवलम्ब्यानुमानादीश्वरस्य प्रधानाधिष्ठानत्वमुच्यते । न च पशुपतेर्निमित्तभूतस्य कुलाला-दिदृष्टान्तेन प्रधानाधिष्ठानत्वमुपपद्यते । कुलालस्य सशरीरत्वात्त्व-

दीयमतानुमितस्येश्वरस्याशरीरत्वाद्दृष्टान्तदार्ष्टान्तिकयोर्वैरूप्यात् ॥२।२।३९॥

## करणवच्चेन्न भोगादिभ्यः ॥२।२।४०॥

भोक्तुः क्षेत्रज्ञस्याशरीरस्यैव करणकलेवराद्यधिष्ठानत्ववदीश्वरस्याप्यशरीरस्य प्रधानाधिष्ठानत्वमुपपद्यत इति चेन्न, भोगादिभ्य । न जीवदृष्टान्तेनेश्वरस्य प्रधानाधिष्ठितित्वमुपपद्यते । जीव इव पशुपतावपि पुण्यपापफलभोगापत्ते । अदृष्टभोगार्थमेव करणकलेवराद्यधिष्ठानत्व जीवस्य । त्वदीयमतसिद्धेश्वरस्यापि तथात्वापत्तेर्न प्रधानाधिष्ठानत्वमुपपद्यते ॥२।२।४०॥

## अन्तवत्त्वमसर्वज्ञता वा ॥२।२।४१॥

वाशब्दश्चार्थे । पशुपते पुण्यपापरूपादृष्टवशात्प्रधानाधिष्ठानत्वस्वीकारे जीववदन्तवत्त्व सृष्टिसंहाराद्यास्पदत्वमसर्वज्ञता च स्यादित्यसमञ्जसमेवेद मतम् । शैवागमे वेदाविरोधिनामपि कियता धर्माणामुपलब्धिरस्ति तथापि निमित्तोपादानभेदशवभस्मस्नान भगस्थात्मध्यानादीना वेदविरुद्धाना धर्माणा तद्दर्शने बाहुल्याद् सामञ्जस्य प्रदर्शितमितिसिद्धम् ॥२।२।४१॥

*इति पत्यधिकरणम् ।*

---

*अथोत्पत्त्यसम्भवाधिकरणम् ।*

## उत्पत्त्यसम्भवात् ॥२।२।४२॥

कपिलादितन्त्राप्रमाणत्ववद्भगवत्प्रणीते पञ्चरात्रेप्यप्रामाण्यमाशङ्क्य निराकरोति । "वासुदेवात्परमात्मन सकर्षणाख्यो जीव

उत्पद्यते, तस्मात्प्रद्युम्नाख्य मनो जायते, तस्मादनिरुद्धाख्योऽहङ्कारो जायते'' इति पञ्चरात्रप्रक्रिया। तत्र जीवस्योत्पत्तिरभिधीयते। तस्माज्जीवोत्पत्ते न जायते म्रियते वा विपश्चित्' इत्यादिजीवाना दित्ववादिश्रुतिविरोधेनासम्भवात् ॥२।२।४२॥

## न च कर्तुः करणम् ॥२।२।४३॥

लोके कर्तुर्देवदत्तादे सकाशात्करणस्य कुठारादेरुत्पत्त्यदर्शना जीवात्सकर्षणात्करणस्य मनस उत्पत्तिर्न सभवति। ''एतस्माज्जायते प्राणो मन सर्वेन्द्रियाणि च'' इति परमात्मन एव मनस उत्पत्ति श्रवणात्। तस्माच्छ्रुतिविरुद्धार्थे नैषा पाञ्चरात्रकवचसा तात्पर्यं न वा तन्त्रस्याप्रामाण्यम् ॥२।२।४३॥

कुत्र तर्ह्येतेषा वाक्याना तात्पर्यमित्यत्राह—

## विज्ञानादिभावे वा तदप्रतिषेधः ॥२।२।४४॥

वाशब्दात्पक्षो विपरिवर्तत। विज्ञान च तदादि च विज्ञानादि पर ब्रह्म। सकर्षणप्रद्युम्नानिरुद्धाना परब्रह्मभावे सति 'अजायमानो बहुधा विजायते' इति श्रुते। 'सकर्षणोऽह प्रद्युम्नोऽनिरुद्धोऽह सनातन। एक एव चतुर्धाऽगात्'' इत्येवमादिगोपालतापिनीयोप निषच्छ्रुतिभ्यश्च स्वेच्छावतारस्यैवात्राभिधानात्तदप्रविषेध। तत्प्रामा ण्यस्य प्रतिषेधो नोपपद्यत इत्यर्थ ॥२।२।४४॥

## विप्रतिषेधाच्च ॥२।२।४५॥

अचेतना परार्था च नित्या सततविक्रिया।
त्रिगुणा कर्मिणा क्षेत्र प्रकृते रूपमुच्यते॥
व्याप्तिरूपेण सम्बन्धस्तस्याश्च पुरुषस्य च।
स ह्यनादिरनन्तश्च परमार्थेन निश्चित॥

इत्यस्मिन्नपि तन्त्रे जीवोत्पत्तिप्रतिषेधात्। तुल्यबलवद्विरोधो

विप्रतिषेधः। विप्रतिषेधे परं कार्यमिति वचनाच्छ्रुतेः स्मृतितः प्रबलत्वात् पञ्चरात्रस्मृतेः श्रुत्यनुसारेण नेतव्यत्वात् संकर्षणादीनां स्वेच्छयैवाप्राविर्भावत्वेनोत्पत्त्यसंभवाद्वेदाविरुद्धत्वेन प्रामाण्यमेवास्य मतस्येति ॥२।२।४५॥

इत्युत्पत्त्यसम्भवाधिकरणम् ।

इतिश्रीकान्यकुब्जद्विजोत्तमकुलोत्तसगुणपुरुषतत्त्वाभिज्ञविरक्तवैष्णवप्रवर
श्रीसम्प्रदायाभिवर्धकायोध्यकबिन्दु श्रीपाठसंस्थापक
श्रीमद्रामानन्दीयाचार्यश्रीरामप्रसादस्वामिकृत
ब्रह्मसूत्रभाष्यदीप श्रीजानकीकृपाभाष्य
संक्षिप्तसारे द्वितीयाध्यायस्य
द्वितीयः पादः ॥ २ ॥

*श्रीभगवद्रामप्रसादाचार्यप्रणीत श्रीजानकीकृपाभाष्यस्य सङ्क्षिप्तसारे*

## द्वितीयाध्यायस्य तृतीयः पादः ।

*अथ वियदधिकरणम् ।*

श्रुतिविरुद्धत्वेन परपक्षाणा भ्रममूलकत्वेनाप्रामाण्यमभिधाय श्रुतीनामपि परस्परविरुद्धत्वेनाप्रामाण्यशङ्का स्यादिति तदपाकरणार्थं पश्चात्तन पादद्वयमारभ्यते। तत्रादौ सृष्ट्यादिवाक्यानाम विरोध प्रतिपादयितुमाकाशमधिकृत्य पूर्वपक्षयति पञ्चभि सूत्रै —

**न वियदश्रुतेः ॥२।३।१॥**

आकाश उत्पद्यत न वति सशये नोत्पद्यत एवाकाश । कुत ? । अश्रुते । श्रुतावुत्पत्तेरश्रुते । 'छान्दोग्ये सदेव सोम्येदमग्र आसीत्" "तदैक्षत बहुस्याम्प्रजायेय" "तत्तेजोऽसृजत" ( छा० ६।२।३। ) इति सृष्टिवाक्य गगनस्योत्पत्तिर्न श्रूयते ॥२।३।१॥

**अस्ति तु ॥२।३।२॥**

तुशब्द पूर्वपक्षव्यावर्त्तक । अस्त्येवाकाशस्योत्पत्ति । "तस्माद्वा एतस्मादात्मन आकाश सम्भूत" ( तै २।१। ) इति श्रुते । नचास्या स्वरवेणोत्पत्तिमाकाशस्याभिदधत्या श्रुतेरप्रामाण्य शक्यमुपकल्पयितुम् । नह्यस्ति परस्पर विरोधो येनैतस्या अप्रामाण्य स्यात्। छान्दोग्ये तु तेज आरभ्य सृष्टिरुपन्यस्यते। तव प्रागाकाशस्य तैत्तिरीयश्रुतिसम्मता सृष्टिरवगन्तु शक्यैवेति न कश्चिद्विरोध ॥२।३।२॥

भूय आशङ्कते—

**गौण्यसम्भवात् ॥२।३।३॥**

यदुक्त "तस्माद्वा एतस्मादात्मन" इति श्रुत्याकाशस्योत्पत्तिरवगम्यत इति तदयुक्तम् तस्या श्रुतेर्गौणत्वात्। कुत ? "तत्तेजोऽ

सृजत" ( छा. ६।२।३। ) इत्यन्यत्र तेजस एव प्रथमसृष्टिः श्रूयते। तदानुगुण्येन वियदुत्पत्तिश्रुतिर्गौण्येव ॥२।३।३॥

## शब्दाच्च ॥२।३।४॥

"वायुश्चान्तरिक्षं चैतदमृतम्" ( बृ० ४।३।३ ) इति श्रुतिशब्दाच्चाकाशस्यामृतत्वमुच्यते। तस्मान्न वियदुत्पत्तिः सम्भवति॥२।३।४॥

ननु "तस्माद्वा एतस्मादात्मन" इति श्रुतौ श्रूयमाणस्य सम्भूतपदस्यैकस्यैवाकाशे गौणत्वमग्न्यादौ च प्राधान्यमिति कथं संगच्छत इत्याशङ्कायामाह—

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥२।३।५॥

"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" ( तै. २।१ ) इत्यत्रैकस्यैवाकाशाद्वायुः वायोरग्निरिति सर्वत्रानुपक्तस्य सम्भूतपदस्याकाशे गौणत्वेऽपि वाय्वादौ मुख्यत्वं स्यादेव। ब्रह्मशब्दवत्। यथा ब्रह्मशब्दस्य "अन्नं ब्रह्मेति व्यजानात्" ( तै० ३।१ ) इत्यादिष्वन्नादिषु गौणत्वं "आनन्दो ब्रह्मेति व्यजानात्" (तै. ३।६।) इत्यत्र च मुख्यत्वम्। तथा प्रकृते सम्भूतपदस्यापि मुख्यत्व गौणत्वञ्च सम्भवति॥ २।३।५॥

सिद्धान्तयति—

## प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥२।३।६॥

"येनाश्रुत श्रुतम्भवत्यमतं मतमविज्ञातं विज्ञातम्" इति च्छान्दोग्यादिष्वेकविज्ञानेन सर्वविज्ञानप्रतिज्ञा प्रतिपादिता। तस्याश्चाहानिराकाशस्य ब्रह्मकार्यत्वेनैव भवति। कारणभूतस्यैकस्य ब्रह्मण एव नित्यत्वेन तदव्यतिरेकात् ब्रह्मकार्यभूतानामाकाशादीनामिति। छान्दोग्याद्युपनिषत्सु वियदादीनामुत्पत्तिर्दृश्यते। "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" (छा० ६।२।१) इति सृष्टेः

प्रागेकत्वमभिधाय "ऐतदात्म्यमिदं सर्वं" (छा० ६।८।७) इत्यादि शब्देभ्यश्च ब्रह्मात्मकत्वेनाव्यतिरेकं कार्यभूतेष्वाकाशादिषु प्रतीयते । तेजस उत्पत्तिर्नाकाशोत्पत्तिं प्रतिषेधति ॥ २।३।६ ॥

## यावद्विकारन्तु विभागो लोकवत् ॥२।३।७॥

तु शब्दश्चार्थे । यद्यपि छान्दोग्ये 'तत्तेजोऽसृजत" इत्यत्र आकाशस्योत्पत्तिर्न स्पष्टमभिहिता तथापि "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" (छा० ८।६) "ऐतदात्म्यमिदं सर्वम्" इत्याकाशादेः सर्वस्य ब्रह्मविकारत्ववचनेन सर्वस्य ब्रह्मणो विभाग उत्पत्तिरभिहितैवेत्यवगन्तव्यम् । लोकवत् । यथा लोके मृदो विभागो मृद उत्पन्नस्तथा प्रकृतेऽपीति ॥ २।३।७ ॥

## एतेन मातरिश्वा व्याख्यातः ॥ २।३।८ ॥

एतेन ब्रह्मणो वियदुत्पत्तिरिति व्याख्यानेन वायुरपि वियदन्तर्गतादाकाशभावमापन्नाद्ब्रह्मणः सम्भूत इति वायुरप्युत्पत्तिमत्तया व्याख्यातः । वायोर्लयप्रतिषेधस्तद्विषयसामृतत्ववचनञ्चापेक्षिकम् । वायोर्नित्यत्वे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया हानिः स्यात् । वायोः पृथग्व्याख्यानन्तूत्तरार्थम् ॥ २।३।८ ॥

## असम्भवस्तु सतोऽनुपपत्तेः ॥२।३।९॥

तु शब्दोऽवधारणार्थकः । सतः सदा विद्यमानस्य परमकारणस्य परस्य ब्रह्मण उत्पत्त्यसम्भवः । कुतः ? अनुपपत्तेः । ब्रह्मणः कारणत्वान्वेषणे तस्यापि कारणमिति स्यादनवस्था । अपहतपाप्मत्वादिगुणकस्य तस्य जन्महेतुकपुण्यपापाभावेनोत्पत्त्यनुपपत्तेः । "न चास्य कश्चिज्जनिता न चाधिपः" (श्वे० ६।९) इति स्फुटतज्जनकत्वनिषेधाच्चतज्जन्मानुपपत्तेरिति ॥ २।३।९ ॥

इति वियदधिकरणम् ।

( *अथ तेजोऽधिकरणम्* । )

## तेजोऽतस्तथाह्याह ॥२।३।१०॥

छान्दोग्ये ब्रह्मणस्तेजस उत्पत्ति श्रूयते । तैत्तिरीये तु वायो स्तदुत्पत्तिरित्युभयोर्वाक्ययोरस्ति परस्पर विरोधा न वेति सशये न ह्येकेन पदार्थेन युगपद् द्वाभ्या शक्यमुत्पत्तुमित्यस्ति विरोध इति प्राप्त आह—तेजोऽतस्तथा ह्याहेति । अतो वायो सकाशात्तेज उत्पद्यते । तथा ह्याह श्रुति "वायोरग्नि" (तै० २।१) अचेतना द्वायोस्तत्सजातीयस्याचेतनस्य तेजस उत्पत्ति सम्भवति न तु विजातीयाच्चेतनाद्ब्रह्मण । तस्माद्वायोस्तदुत्पत्तेर्मुख्यत्वाद्ब्रह्मणस्तदुत्प त्तेश्च गौणत्वान्नास्ति विरोध इति पूर्वपक्षाद्यसूत्रम् ॥ २।३।१० ॥

## आपः ॥२।३।११॥

अतस्तथा ह्याहेत्यनुवर्तते । "तदपोऽसृजत" (छा ६।२।३) इत्यादि छान्दोग्यवाक्यस्य "अग्नेराप" (तै २।१) इति तैत्तिरीय वाक्येन विरोधोऽस्ति न वेति सशय । पूर्वपक्षस्तु अतस्तेजस एवाप उत्पद्यन्ते हि यस्मात्तथा तेजसोऽपामुत्पत्तिमग्नेराप इति श्रुतिराहेति ॥२।३।११॥

## पृथिवी ॥२।३।१२॥

अत्राप्यतस्तथाह्याहेत्यनुवर्तते । अत अद्भ्य पृथिवी जायते हि यस्मात्तथा पृथिव्या अद्भ्य उत्पत्ति "ता अन्नमसृजन्त"(छा.६।२।३) इति श्रुतिराहेति ॥२।३।१२॥

## अधिकाररूपशब्दान्तरेभ्यः ॥२।३।१३॥

पूर्वसूत्रमनुवर्तते । "ता अन्नमसृजन्त" ( छा. ६।२।३) इत्या दावन्नशब्देन पृथिव्या ग्रहण कुत इतिचेत्तदाह—अधिकारेत्यादि। तदन्नम् पृथिव्येव । कुत ? अधिकाररूपशब्दान्तरेभ्य । 'तत्तेजो

ऽसृजत" इति महाभूतसृष्ट्यधिकारात् "यदग्ने रोहित रूप तेजस स्तद्रूप यच्छुक्ल तदपा यत्कृष्ण तदन्नस्य" इति रूपकथनादन्नशब्दे नाप्तेजसो सजातीयाया पृथिव्या एवाभिधानमुच्यते। तथा तैत्तिरीये समानप्रकरणे "अद्भ्य पृथिवी" (तै २।१) इत्यद्भ्य पृथिव्या एवोत्पत्ति रभिधीयते। तथा चादनीयजातस्य पृथिवीविकारतया कार्यमभिद धानोऽयमन्नशब्द कारणभूताम्भुवमेवाभिधत्त इति ॥२।३।१३॥

तदेव केवलेभ्यस्तेज आदिभ्य एवाबादिसृष्टिरिति पूर्वपक्षिते सिद्धान्तयति—

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥२।३।१५॥

तुशब्द पूर्वपक्षव्यावर्तक। तदभिध्यानकर्ता परमात्मैव तेजो बन्नादीना सर्वेषा सृष्टिकर्त्ता। तदभिध्यानमीक्षण बहुस्यामिति सकल्प एव। अयमाशय "तदैक्षत बहु स्याम्प्रजायेय" (छा ६।२।३) इति सकल्प्य 'तत्तेजोऽसृजत" एव "तत्तेज ऐक्षत बहु स्याम्प्रजायेयेति तदपोऽसृजत" 'ता आप ऐक्षन्त बह्वय स्याम प्रजायेमहि" (छा ६।२।४) इत्यात्मनो बहुभवनसकल्परूपेक्षणस्य तेज प्रभृतिशरीरत्वेनात्मसृष्टिकरणसामर्थ्यस्य च परमात्मन एव सम्भवात्। तेजआदीनामचेतनाना तदसम्भवात्। तथा च तज आदीनामबाद्युत्पादकत्वानुपपत्ति। परमात्मनस्तु 'य पृथिव्या तिष्ठन्नि"त्यारभ्य "य आकाशे तिष्ठन् यस्याकाश शरीर य आकाशमन्तरो यमयति" (बृ० ३।७।१२) इत्येवमाद्यन्तर्यामिश्रुति सिद्धाकाशादिसर्वशरीरस्य सत्यसकल्पस्य विचित्रसृष्टिरचनाशक्ति मत सर्वज्ञस्याकाशवायुतेजोऽवाद्युत्पादकत्वोपपत्ते। स एव पर मात्माकाशादिशरीर ईक्षणपूर्वकमाकाशादीनामुत्पादक इति सिद्धम् ॥२।३।१४॥

*इति तेजोऽधिकरणम्।*

*अथ विपर्ययाधिकरणम् ।*

## विपर्ययेण तु क्रमोऽत उपपद्यते च ॥२।३।१५॥

तुशब्दोऽवधारणे । अव्यक्तमहदहङ्कारानाशवायुतेजआदिक्रमा द्विपर्ययेण 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायु र्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी ॥' इति य सर्वेषां कार्याणां ब्रह्मानन्तर्यरूपः क्रमः स तत्तद्रूपाद्ब्रह्मणस्तत्तत्कार्योत्पत्तेरेवोपपद्यते । ब्रह्मणः परम्परया सर्वकारणत्वे तु सर्वेषां कार्याणां ब्रह्मानन्तर्यरूपः क्रम एतस्माज्जायते प्राण इत्यादिश्रुत्युक्तः उपरुध्येत ॥२।३।१५॥

*इति विपर्ययाधिकरणम् ।*

---

*अन्तराविज्ञानाधिकरणम् ।*

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥२।३।१६॥

"एतस्मादात्मन आकाशः सम्भूतः" ( तै० २।१ ) इत्यात्मन आकाशादुत्पत्तिक्रमस्य "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" ( मु० २।१।३ ) इत्युक्तेनात्मन इन्द्रियाद्युत्पत्तिक्रमेण विरोधोऽस्ति नवेति संशयेऽस्ति विरोध इत्याह–अन्तरेति । विज्ञायतेऽनेनेतिव्युत्पत्त्या विज्ञानशब्देन बुद्धीन्द्रियाणि गृहीतानि स्युः । सर्वेन्द्रियाणि चेतिश्रुत्यननुसारात् । संशयात्मकान्मनसो निश्चयात्मिकाया बुद्धेर्भेदाद्बुद्धेरपि ग्रहणम् ।

तत्रात्मन इन्द्रियाणामुत्पत्तिस्तदनन्तरमाकाशवायुज्योतिराद्युत्पत्तिरित्यात्मनो भूतानाञ्चान्तराल इन्द्रियाणामुत्पत्तौ "एतस्माज्जायते प्राणः" ( मु० २।१।३ ) इतीदं वाक्यमेव लिङ्गं ज्ञापकम् । तस्माद्धि

ज्ञादात्मन इन्द्रियप्राणबुद्धिमनांसि समुत्पद्यन्ते। तेभ्यो भूतानीत्य नेन क्रमेणात्मन आकाशः सम्भूत इति साक्षादात्मन आकाशाद्यु त्पत्तिक्रमस्य विरोधोस्तीति चेन्न। कुतः ? अविशेषात् 'यस्य पृथिवी शरीरं' "यस्याप: शरीरम्" इत्याद्यन्तर्यामिश्रुतिभ्यः सर्वेषां भूते न्द्रियादीनां परमात्मशरीरत्वावगमात्। शरीरवाचकशब्दानां शरीरिणि पर्य्यवसानमिति सिद्धान्तात्। एवञ्च भूतेन्द्रियादि पदानां भूतेन्द्रियादिशरीरकब्रह्माभिधायकत्वात्सर्वेषामपि साक्षाद्ब्र ह्मण उत्पत्तरविशेषात्। ब्रह्मणोऽन्यस्मादुत्पत्तिस्वीकारे तस्य ब्रह्मा नन्यत्वानुपपत्त्या कारणात्कार्यस्य व्यतिरेकत्वनिष्पत्तेः कारणैक ज्ञानेन सर्वकार्यविज्ञानप्रतिज्ञायाः हानिः स्यात्। तस्मादुक्त एवार्थोऽवगन्तव्यइति॥२।३।१६॥

तत्तद्वस्तुवाचकत्वेन शब्दानां ब्रह्मणि कथं मुख्यवृत्त्या प्रवृ त्तिरित्याह—

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्त- द्भावभावित्वात् ॥२।३।१७॥

तुशब्दः शङ्काव्यावर्तकः। चराचरवस्तुव्यपाश्रयस्तद्व्यपदेशस्त द्वाचकः शब्दो ब्रह्मण्यभाक्तो मुख्य एव स्यात्। कुतः ? तद्भावभा वित्वात्। चराचराणां तदन्तर्गतानां तेजःप्रभृतीनां ब्रह्मशरीरतया ब्रह्मभावेन भावितत्वात्। ब्रह्मणः शरीरितया मुख्यत्वात्। चराचरस्य तच्छरीरतया तदीयत्वेन गौणत्वात्। तथा च यस्य भावेन यो भावितो भवति स तस्माद् गौण एव भवति। यथा शिष्यः पुत्रत्वेन पश्यतीत्यत्र पुत्रभावेन भावितो दृष्टः शिष्यो गौण एव पुत्रस्तु मुख्यः। एवं चराचराणां ब्रह्मभावभावितत्वाद् ब्रह्मणि मुख्यत्वोप पत्तेः। चराचराणां गौणत्वम्। तथाचैकस्यैव शब्दस्य मुख्यया वृत्त्या

ब्रह्माभिधायकत्वम्। गौण्या च वृत्त्या चराचरबोधकत्वमिति न कश्चिद्विरोध इति ॥२।३।१७॥

*इत्यन्तराविज्ञानाधिकरणम् ।*

---

*अथात्माधिकरणम् ।*

## नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥२।३।१८॥

आकाशस्योत्पत्तिरिव जीवस्यापि ब्रह्मण उत्पत्तिरस्ति न वा ? किं युक्तम् ? अस्तीत्येव। कुत ? 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्।' (छा. ६।२।२) इति सृष्टे प्राक्काल एकत्वनिश्चयात्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाश्च तथा सत्येवोपपत्तेः। एवं प्राप्ते समाधीयते—नात्माऽश्रुते। न जीवात्मोत्पद्यते। कुत अश्रुते। तथाऽश्रवणात्। न तादृशी काचिदपि श्रुतिरस्ति यत्र जीवोत्पत्ति श्रुता भवेत्। प्रत्युत श्रुतिभ्यो नित्यत्वमेवावगम्यते। तथाहि—"अजो नित्य शाश्वतोऽयं पुराणो न हन्यते" (का २।१८) "न जायते म्रियते वा विपश्चित्" (का० २।१८) "ज्ञाज्ञौ द्वावजावीशानीशौ" (श्वे० १।९) "नित्यो नित्याना चेतनश्चेतनानाम्" (श्वे० ६।१३) इत्याद्यनेकश्रुतिभ्य आत्मनो नित्यत्वमेवावगम्यते।

यत्तु "एव वा अरेऽयमात्माऽनन्तरोबाह्य कृत्स्न प्रज्ञानघन एवैतेभ्यो भूतेभ्य समुत्थाय तान्येवानुविनश्यति" (बृ० ४।५।१३) इत्यनया श्रुत्याऽऽत्मनो विनाश श्रूयत इति। तन्न। उत्तरवाक्यशेषे "न प्रेत्य सज्ञास्ति" (बृ० ४।५।१३) इति सज्ञामात्रस्यैव विनाशोऽभिहितो न जीवस्वरूपस्य। अत एव "न वा अरेऽहं मोह ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा" (बृ० ४।५।१४) इति श्रुत्या स्पष्टमेवात्मनोऽविनाशित्वमनुच्छित्तिधर्मत्वमभिहितम्।

तस्मादात्मन उत्पत्तिमत्त्वम् । कथ तर्ह्येकविज्ञानेन सर्वविज्ञान प्रतिज्ञायाउपपत्तिरिति चेदुच्यते । आकाशादिवज्जीवस्यापि कार्यत्वा त्कार्यस्य कारणव्यतिरेकत्वेन कारणानन्यत्वात्कारणज्ञानेन कार्यज्ञान मुपपद्यते । कार्यत्व नाम कस्यचिद्द्रव्यस्यावस्थान्तरापत्ति । ज्ञान सकोचविकासलक्षण जीवस्यावस्थान्तर भवत्येव ॥२।३।१८॥

*इत्यात्माधिकरणम् ।*

---

*अथ ज्ञाधिकरणम् ।*

## ज्ञोऽत एव ॥२।३।१९॥

इदानीं जीवस्वरूप निरूप्यते । किं कपिलाभिमत चिन्मात्र मेवात्मन स्वरूपमथवा कणादाभिमत पाषाणकल्पमचित्स्वरूप मागन्तुकचैतन्यगुणमुत ज्ञातृत्वमेवास्य स्वरूपमिति सशये किं युक्तम् ? चिन्मात्रस्वरूपमिति । कुत ? "यो विज्ञाने तिष्ठन् यस्य विज्ञान शरीरम्" इत्यन्तर्यामिश्रुतेरात्मनो विज्ञानस्वरूपत्वाव गमात् । अथवाचेतन मागन्तुक चैतन्यगुणमस्य स्वरूपम् । "न प्रेत्य सज्ञास्ति" इति मुक्तस्य चैतन्यप्रतिषेधात् । एव प्राप्तेऽभिधीयते "ज्ञोऽत एव" इति । ताभ्य इति पूर्वसूत्रादनुवर्तते । अयमात्मा जानातीति ज्ञ , ज्ञातृस्वरूप एव न ज्ञानमात्रस्वरूपो नापि जडस्वरूप स्ताभ्य श्रुतिभ्य । 'अथ यो वेदेद जिघ्राणीति स आत्मा" "मनसैवैतान् कामान् पश्यन् रमते ।" ' एष हि द्रष्टा श्रोता घ्राता रसयिता" इत्यादिश्रुतिभ्यो बद्धमुक्तोभयावस्थात्मनो ज्ञातृत्वस्वरूप त्वावगमात् । ' यो विज्ञाने तिष्ठन्" "विज्ञान यज्ञ तनुते" इत्यादौ ज्ञानमात्रव्यपदेशस्तु ज्ञानस्य प्रधानगुणत्वात्स्वरूपानुसम्बन्धित्वेन स्वरूपनिरूपकगुणत्वाद् ज्ञानवत्त्वस्य प्रकाशकत्वाद्वोपपद्यते ॥ ॥२।३।१९॥

आत्मन सर्वगतत्व निराकरोति—

## उत्क्रान्तिगत्यागतीनाम् ॥२।३।२०॥

ताभ्य इत्यनुवर्तते। नायमात्मा सर्वगत किन्त्वणुरेव। उत्क्रान्तिगत्यागतीनाम्। आत्मोत्क्रान्तितद्गतितदागतिश्रुतिभ्य इत्यर्थ। "तेन प्रद्योतेनैष आत्मा निष्क्रामति" (बृ ६।४।२) ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" (कौपा १।२।) "तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' (बृ ६।४।२) इत्यादि गत्यागत्युत्क्रान्तिश्रुतिभ्य आत्मन सर्वगतत्व नोपपद्यते किन्त्वणुत्वमेव। सर्वगतस्य विभो गतिश्चागतिश्च नोपपद्यत। तस्मादात्मनोऽणुत्वमेव ॥२।३।२०॥

## स्वात्मना चोत्तरयोः ॥२।३।२१॥

चाऽवधारणार्थ। देहस्यात्मसकाशादपाकरणरूपाया देहात्मवियोगरूपाया उत्क्रान्तित्वस्वीकारे स्यात्कथञ्चिदियमुत्क्रान्ति। अथवा देहस्वामित्वनिवृत्तिरेवोत्क्रान्ति। सा च विभुत्वेऽप्यात्मन सम्भवति। उत्तरयोर्गत्यागत्योस्तु न कथञ्चिदपि सम्भव। स्वात्मना सम्बद्धत्वादणुरेवात्मा ॥२।३।२१॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥२।३।२२॥

"स वा एप महानज आत्मा" (बृ ६।४।२५) इति महत्त्व श्रुतेर्न जीवोऽणुरिति चेन्न, इतराधिकारात्। जीवादितरस्य परमेश्वरस्य तत्राधिकारात्। उपक्रमे प्रस्तुतेपि जीवे "यस्यानुवित्त प्रतिबुद्ध आत्मा" (बृ ६।४।१३) इति मध्ये परमात्मप्रस्तावात् तस्यैवेद महत्त्वमुपदिश्यते। न जीवात्मन ॥२।३।२२॥

## स्वशब्दोन्मानाभ्याञ्च ॥२।३।२३॥

"एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राण पञ्चधा

सविवेश" (मु० ३।१।९।) स्वम्याणुत्वस्य वाचको योऽणुशब्द आत्म पदसामानाधिकरण्येन निर्दिष्टस्तस्मादुन्मानाच्च सर्वेभ्य स्थूलपरिमाणेभ्य उद्धृत्य मानमुन्मानमत्यन्तापकृष्टपरिमाणमितियावत्तस्मात्। "वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीव स विज्ञेय स चानन्त्याय कल्पते" (श्वे० ५।९।) "आराग्रमात्रो ह्यवरोऽपि दृष्ट" (श्वे० ५।८।) इत्याराग्रमात्रान्मानाच्च जीवोऽणुरेव ॥ २।३।२३॥

नन्वात्मनोऽणुत्वे देहव्यापिसुखाद्यनुभवविरोध इत्याशङ्का मतान्तरेण परिहरति—

## अविरोधश्चन्दनवत् ॥२।३।२४॥

यथा चन्दनबिन्दु शरीरैकदेशस्थ शरीरव्यापि सुखं जनयति तथाऽणुर्जीवोऽपि देहव्यापि सुखादिकमनुभवतीत्यविरोध ॥२।३।२४॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥२।३।२५॥

ननु चन्दनबिन्दोर्देशविशेषेऽवस्थितिर्दृश्यते । आत्मनस्त्वणुत्वेन काप्यवस्थितिर्नोपलभ्यत इति चेन्न । अभ्युपगमात् । जीवाणुत्वस्य श्रुत्याभ्युपगमात् । "योऽय विज्ञानमय प्राणेषु हृद्यन्तर्ज्योति" (बृ० ६।३।७) "हृदि ह्ययमात्मा तत्रैकशतं नाडीनाम्" (प्र० ३।६।) इत्यल्पपरिमाणे हृदि जीवस्यावस्थित्यभ्युपगमवचनेनाणुत्वमिति ॥ २।३।२५ ॥

इदानीं स्वमतमाह—

## गुणाद्वाऽलोकवत् ॥२।३।२६॥

वाशब्देन मतान्तर व्यवच्छिद्यते । स्वमते तु जीवात्माऽणुत्वेऽपि स्वगुणेन ज्ञानेन कृत्स्नं देह व्याप्यावस्थित । आलोकवत् । व्यापिप्रभागुणकप्रदीपवत् । यथाल्पोऽपि गृहैकदेशस्थो

दीप प्रभात्मकेन व्यापकेन स्वगुणेन कृत्स्न गृह प्रकाशयति। तद्वदात्माऽपि ज्ञानेन कृत्स्न देह व्याप्य तद्वेदनादिक जानाति। ॥२।३।२६॥

ननु गुणस्य गुणिव्यतिरिक्तदेशेऽवस्थानादर्शनाद्विज्ञान यज्ञ तनुत इत्यादौ च ज्ञानस्यैवात्मस्वरूपत्वश्रवणात् कथ ज्ञानस्य स्व रूपव्यतिरिक्तगुणत्व कथ वा देशान्तरे व्याप्यावस्थानमित्या शङ्कायामाह—

## व्यतिरेको गन्धवत्तथा च दर्शयति ॥२।३।२७॥

पुष्पपेटिकातो दूरस्थस्यापि पुस पुष्पात्मकपृथिवीगुणस्य गन्ध स्य व्यतिरेकेण देशान्तर उपलम्भदर्शनाज्ज्ञानस्यापि तादृग्या त्मव्यतिरेकत्व निष्पद्यते। ननु 'विज्ञान यज्ञ तनुते" (तै० २।५।१) इतिश्रुतिविरोधेनोक्तयुक्त्या ज्ञानस्यात्मव्यतिरेकत्व नोपपद्यत इत्या शङ्क्याह—"तथा च दर्शयति"। आत्मनो हृदयायतनत्वमणु परिमाणत्वञ्चाभिधाय "आ लोमभ्य आ नखेभ्य" इति ज्ञानगुणे नात्मन सर्वदेहव्यापित्व दर्शयति श्रुतिस्तस्मान्न श्रुतिविरोध। ॥ २।३।२७ ॥

## पृथगुपदेशात् ॥२।३।२८॥

"न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" (बृ० ६।३।३०) इति विज्ञातुरात्मनो विज्ञातर्ज्ञानगुणस्य विपरिलोपो विनाशो न विद्यते। इति ज्ञातुरात्मनस्तद्गुणभूतस्य ज्ञानस्य पृथक्व्यपदेशात्। किञ्च "प्रज्ञया शरीर समारुह्य" (कौषी० ३।६।) इत्यात्मन कर्तृत्वेन ज्ञानस्य करणत्वेन च पृथगुपदेशाद् व्यापिज्ञानगुणद्वारास्य जीवस्य शरीरव्याप्तिरवगम्यते ॥२।३।२८॥

तर्हि 'विज्ञानं यज्ञ तनुते' इति विज्ञानस्वरूप आत्मेत्युपदेश कथमुपपद्यतामित्यत्राह—

तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥२।३।२९॥

तुशब्द पक्षव्यावर्तक । आत्मनो विज्ञानगुणसारत्वाद्धि ज्ञानमितिव्यपदेश । विज्ञानमेवास्य सारभूतो गुण इति । प्राज्ञवत् । "य सर्वज्ञ ससर्ववित्" (मु० १।१।९।) इति सर्वज्ञत्वेन श्रुत प्राज्ञो ज्ञानगुणसारत्वात् "सत्य ज्ञानमनन्त ब्रह्म" इतिज्ञानशब्देन व्यपदिश्यते । यथा च "आनन्द ब्रह्मणो विद्वान् न बिभेति कुतश्चन" (तै०।२।९।) "स एको ब्रह्मण आनन्द" इत्यानन्दगुणकत्वेन श्रुतस्य प्राज्ञस्यानन्दगुणसारत्वादानन्दादिपदेन व्यपदेशस्तद्वदिति॥२।३।२९॥

यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥२।३।३०॥

विज्ञानस्य यावदात्मस्वरूपभावित्वेन तत्स्वरूपनिरूपणधर्मत्वाद्विज्ञानशब्देनात्मव्यपदेशे न दोष । खण्डादिषु तथा दर्शनात् । खण्डादयो यावत्स्वरूपभाविगोत्वादिधर्मवत्त्वेन गौरितिशब्देन व्यपदिश्यन्ते । एवमत्रापि जीवस्य विज्ञानपदेन व्यपदेश । ज्ञानवदात्मनोऽपि स्वप्रकाशत्वेन विज्ञानव्यपदेशो न दोषायेति चकारेण समुच्चय ॥२।३।३०॥

ननु सुषुप्त्यादिषु ज्ञानस्यानुपलब्धे कथ यावदात्मभावित्व न स्वरूपानुबन्धित्वमित्याशङ्क्याह—

पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥२।३।३१॥

तु शब्दश्चोद्य व्यावर्तयति । यथा बाल्ये पुंस्त्वादे सत एव यौवनेऽभिव्यक्ति । एव सुषुप्त्यादिष्वपि सत एव ज्ञानस्यानभिव्यक्तस्य जागरितादिष्वभिव्यक्तिसम्भवात् स्वरूपानुबन्धिधर्मत्वोपपत्तिरिति न दोष ॥२।३।३१॥

एवमात्मनो ज्ञातृत्वमणुत्वञ्चाभिधाय पक्षान्तरे दोष दर्शयति–

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥२।३।३२॥

अन्यथा ज्ञानमात्रात्मस्वरूपस्वीकारे सर्वगतत्वपक्षे च उपलब्ध्यनुपलब्ध्योर्द्वयोर्नित्यत्वप्रसङ्गोऽन्यतरनियमो वा स्यात्। तत्र ज्ञानात्मपक्षे ज्ञानस्य स्वप्रकाशस्वभावत्वात्प्रकाशपर्य्यायोपलब्धेर्नित्यत्वप्रसङ्ग। स्वप्रकाशे ज्ञाने विद्यमाने सत्यप्रकाशपर्याया अनुपलब्धेर्वक्तमयोग्यत्वाज्ज्ञानमेवानुपलब्धेरपिहेतुरिति चेत्तर्हि ज्ञानस्य सर्वदा विद्यमानत्वात्सर्वदोपलब्ध्यनुपलब्धिप्रसङ्ग। अथोपलब्ध्यनुपलब्ध्योर्विरुद्धकार्ययोर्युगपज्जननायोगाज्ज्ञानापलब्ध्यनुपलब्ध्योरन्यतरहेतु स्थाप्यते तदाऽन्यतरनियम स्यात्। एवमात्मन सर्वगतत्वपक्षे। यथा ज्ञानात्मवादिनस्तथैव हेतुचन्यज्ञानवादिनोऽपि समानो दोष। तथा हि सर्वेषामात्मना सर्वगतत्वे सर्वस्याप्यात्मन सर्वसयोगात्तदुपलब्धेर्नित्यत्वप्रसङ्ग। सर्वगतस्य विद्यमानत्वे तदनुपलब्धेरनुपपत्ते। सर्वगतत्वमेवानुपलब्धेरपि हेतुरिति चेत्सर्वगतत्वस्य सर्वदा वर्तमानत्वात्सर्वदोपलब्ध्यनुपलब्ध्यो प्रसङ्ग। अथ युगपद्विरुद्धकार्यजननायोगात्सर्वगतोपलब्ध्यनुपलब्ध्योरन्यतरहेतुस्थापनेऽन्यतरनियम स्यादित्युभयपक्षेऽपि समान एवोक्तदोषप्रसङ्ग। करणायत्तोपलब्धेरपि सर्वेषामात्मना सर्वगतत्वन सर्वं करणं सर्वदा संयुक्तत्वात्सर्वदा तदुपलब्ध्यनुपलब्ध्यादिप्रसङ्ग समान। अदृष्टोत्पत्तिहेतोरपि सर्वसाधारणत्वादुक्तदोष समान। अस्माकन्तु स्वकीयहृत्पुण्डरीकेऽवस्थितत्वादात्मनस्तत्रैवापलब्धिर्नान्यत्रेति व्यवस्थासिद्धेर्नोक्त दोषप्रसङ्ग ॥२।३।३२॥

इति ज्ञाधिकरणम्।

*अथ कर्त्रधिकरणम्*

## कर्त्ता शास्त्रार्थवत्त्वात् ॥२।३।३३॥

आत्मनो ज्ञातृत्ववत्कर्तृत्वमप्यस्ति न वेति संशये नास्तीति पूर्व पक्ष । कुत ? "हन्ता चेन्मन्यते हन्तु हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नाय हन्ति न हन्यते" (का० २।१९।) इत्यादिभिरात्मनो हननक्रियाकर्तृत्व प्रतिषिध्य "प्रकृते क्रियमाणानि गुणै कर्माणि सर्वश । अहङ्कारविमूढात्मा कर्ताहमिति मन्यते' (गी० ३।२७) "नान्य गुणेभ्य कर्तार यदा द्रष्टाऽनुपश्यति" (गी० १४।१९।) इति प्रकृतिगुणानामेव कर्तृत्वप्रतिपादनात्। तस्मात्स्वगुणद्वारा प्रकृतेरेव कर्तृत्व नात्मन । इति प्राप्तऽभिधीयते-कर्ता शास्त्रार्थवत्त्वादिति । आत्मैव कर्ता न गुणा । अचेतनाना गुणाना कर्तृत्वासम्भवात् । कुत आत्मैव कर्ता ? शास्त्रार्थवत्त्वात् । 'यजेत' 'उपासीत' इत्येवमादीना स्वर्गमोक्षादिफलसाधनेषु प्रवर्तकाना शास्त्राणामर्थवत्त्वात् । शास्त्रस्य तत्तत्प्राप्त्युपायज्ञानजननद्वारा तत्तदनुष्ठान प्रवर्तकत्वम् । तत्तु चेतनस्य जीवस्यैव तत्तदुपायज्ञान तदनुष्ठानञ्च सम्भवति नत्वचेतनस्य प्रधानस्य । अतस्तत्तत्फलभोक्तुश्चेतनस्यैव तत्तत्प्राप्तिसाधनकर्तृत्वेन तदुपदेष्टृणा शास्त्राणामर्थवत्त्वम् । तस्माच्चेतनो जीव एव कर्त्ता नत्वचेतन प्रधानम् ।

यत्तु- हन्ता चेन्मन्यते हतमित्यादिभिरकर्तृत्वमेवात्मनोऽभिहितम् । तत्रात्मनो नित्यतया हन्तव्याभावादुपपद्यते । प्रकृते क्रियमाणानीत्यादिक तु सासारिकप्रवृत्तिषु जीवस्य कर्तृत्व सत्त्वादिगुणससर्गकृतम् । न स्वरूपप्रयुक्तमतस्तदेवास्य जन्ममरणहेतुर्भवतीत्यभिहित तत्रैवोक्तम् । "कारण गुणसङ्गोऽस्य सदसद्योनिजन्मसु" (गी० १३।२१।) अतो विवेकी गुणससर्गकृतकर्मस्वासक्ति विहाय तत्राहबुद्धिपरित्यागपूर्वक तत्तत्कर्म कुर्वन्नपि तज्जन्यपुण्यपापाभ्या न

लिप्यते ततो न बध्यत इत्याह "तत्त्ववित्तु महाबाहो गुणकर्मविभागयो । गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते । यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ॥" (गी०) तस्माज्जीव कर्ता ॥२।३।३३॥

## उपादानाद्विहारोपदेशाच्च ॥२।३।३४॥

इतश्चात्मन एव कर्तृत्वम् । "तदेतेषा प्राणाना विज्ञानेन विज्ञानमादाय" ( बृ० ४।१।१७ ) "एवमेवैष एतान् गृहीत्वा" (बृ० ४।१।१८।) इत्यात्मनो ग्रहणशक्त्युपादानत्वश्रवणादकर्तुरुपादानायोगात्तस्यैव कर्तृत्वम् । तथा तत्रैव "स्वे शरीरे यथाकाम परिवर्तते" (बृ० ४।१।८।) इति विहारोपदेशाच्चात्मन कर्तृत्वम् ॥२।३।३४॥

## व्यपदेशाच्च क्रियाया न चेन्निर्देशविपर्ययः ॥२।३।३५॥

इतश्चजीवस्यैव कर्तृत्वम् । "विज्ञान यज्ञ तनुते कर्माणि तनुतेऽपि च" ( तै० २।५।१ ) इति लौकिकवैदिकक्रियाया विज्ञानशब्दवाच्यस्यात्मन कर्तृत्वव्यपदेशाज्जीव कर्ता । विज्ञानशब्देन बुद्धेर्व्यपदेश इति चेन्न । निर्देशविपर्यय स्यात् । विज्ञानमिति कर्तृत्वेन व्यपदेशो न स्यात् । स्याच्चेद्विज्ञानेनेति करणत्वेन । बुद्धे करणत्वात् ॥२।३।३५॥

## उपलब्धिवदनियमः ॥२।३।३६॥

प्रधानस्य कर्तृत्वे तस्य सर्वपुरुषसाधारणत्वादात्मनश्च सर्वगतत्वेन सर्वत्र सन्निधानाच्च सर्वाणि कर्माणि प्रधानकृतानि सर्वेषां भोगाय स्युरिति पूर्वोक्तोपलब्धिवदनियम स्यात् ॥२।३।३६॥

## शक्तिविपर्ययात् ॥२।३।३७॥

इतश्चात्मन एव कर्तृत्वम् । प्रकृतिकार्यभूताया बुद्धे कर्तृत्वे कर्तुरेव भोक्तृत्वमितिनियमाद्भोक्तृत्वमपि तस्या एव स्यात् । ततश्चात्मनो

भोक्तृत्वशक्तेर्विपर्ययो हानिः स्यात् तथा मल्लात्माभ्युपगमो निष्प्रमाणकः स्यात् ॥२।३।३७॥

## समाध्यभावाच्च ॥२।३।३८॥

"यथा दीपो निवातस्थः" इतिवचनान्निवातस्य दीपवन्निश्चलात्माकारवृत्तिः समाधिशब्दनाभिधीयते । आत्मनाऽकर्तृत्वे तस्य समाधेरभावप्रसङ्गात् । समाधिशब्द श्रवणमनननिदिध्यासनानामुपलक्षकः समाधेर्जीवमोक्षार्थोपदेशात् । अचेतनाया कर्तृत्वे तदन्यस्यात्मनो मोक्षानुपपत्तेः ॥२।३।३८॥

ननु आत्मनः कर्तृत्वे सर्वदा कर्तृत्वं स्यादित्याशङ्क्याह—

## यथा च तक्षोभयथा ॥२।३।३९॥

करणकलेवरादिसम्पन्नोऽपि स यदिच्छति तदा करोति । अन्यदा न करोतीत्येव रूपा व्यवस्था स्वीयेच्छाया सत्त्वासत्त्वाभ्यां सम्भवत्येव । यथा वास्यादिसाधनसन्निधानेऽपि तक्षा स्वकीयेच्छामनुसृत्य करोति न करोति च । अचेतनात्मिकाया बुद्धेस्तु भोगादीच्छाया अभावान्न स्याद्व्यवस्था । अतश्चात्मन एव कर्तृत्वं न प्रकृतेः ॥२।३।३९॥

*इति कर्त्रधिकरणम् ।*

---

*( अथ परायत्ताधिकरणम् )*

## परात्तु तच्छ्रुतेः ॥२।३।४०॥

किमिदं जीवस्य कर्तृत्वं जीवायत्तं स्वतन्त्रमेवाहोस्वित्परमात्मायत्तमिति संशयः । किं युक्तम् ? स्वातन्त्र्येण जीवायत्तमेव । कुतः ? यो हि स्वबुद्ध्या शुभमशुभं वा कर्म करोति स एव तत्फलमश्नुते ।

परमात्मायत्तकर्तृत्वे तु तत्फलभोक्तृत्वमपि परमात्मन एव स्यान्न तु जीवस्य। 'फल प्रयोक्तरीति' न्यायात्। परमात्मायत्तकर्तृत्वे विधिनिषेधशास्त्राणां वैयर्थ्यमप्यनिवार्यं स्यात्। तस्माज्जीवस्यैव कर्तृत्वम्। इति प्राप्तेऽभिधीयते–परात्तु तच्छ्रुतेरिति। तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। तत् कर्तृत्वं जीवस्य परात्–जीवान्तर्यामिणः परमात्मन एव भवति। कुतः? तच्छ्रुतेः। तस्य जीवकर्तृत्वस्य परमात्मायत्तत्वश्रुतेः–"अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" (तै. आ. ३।११।१०) "य आत्मानमन्तरो यमयति" (बृ० ३।७।२२) "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति। एष एवासाधु कर्म कारयति तं यमधो निनीषति" इति। तस्माज्जीवकर्तृत्वं परमपुरुषायत्तमेव ॥२।३।४०॥

अथैवं जीवकर्तृत्वस्य परमात्मन आयत्तत्वे तस्य वैषम्यनैर्घृण्ये स्याताम् जीवस्य तु विधिप्रतिषेधयोर्नैरर्थ्यमित्यत आह–

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धाऽवैयर्थ्यादिभ्यः ॥२।३।४१॥

तुशब्दः शङ्कानिवर्तकः। जीवेन स्वबुद्ध्या कृतं शुभाशुभप्रयत्नमपेक्ष्यान्तर्यामी परमात्मा तादृशीमेव जीवप्रयत्नानुगुणां स्वकीयामनुमतिं प्रदाय जीवं प्रवर्तयति। सर्वेष्वपि शुभाऽशुभकर्मसु परमपुरुषानुमतिमन्तरेणास्य जीवस्य स्वातन्त्र्येण प्रवृत्तिर्नोपपद्यते। कुतः? विहितप्रतिषिद्धाऽवैयर्थ्यादिभ्यः। 'यजेत' 'उपासीत' 'न हन्तव्यः' इत्येवमादीनां विहितप्रतिषिद्धवाक्यानामवैयर्थ्यादिभ्यः। तथा च तत्तत्कर्मसु जीवः परमात्मसहाय एव प्रवृत्तिं वा निवृत्तिं वा तेभ्यो विदधाति। तेन च स्वयमेव विधिप्रतिषेधयोग्यो भवति न परमात्मा। जीवकृतप्रयत्नानुगुणप्रवर्तने फलप्रदाने च न परमात्मनोऽपि वैषम्यनैर्घृण्ये इति। यः परमपुरुषाराधन

कुर्वन् स्वयं तु निर्ममः कर्मानुतिष्ठति तं तत्कर्मण्यभिरुचिं जनयन् सद्बुद्धिप्रदानद्वारा परमात्मैव प्रेरयति । यश्च स्वयमभिमानवान् हिंसादिरूपनिषिद्धकर्माण्याचरति तञ्च तथा भूतेष्वेव कर्मसु प्रीतिमुत्पादयन् तत्रैव प्रवर्तयतीतिभावः । तथा च न परमात्मनो दोषलेशोऽपि न वा विहितप्रतिषिद्धानां कर्मणामपि वैयर्थ्यमिति सर्वं निरवद्यम् ॥२।३।४१॥

*इति परायत्ताधिकरणम् ।*

---

*अथांशाधिकरणम् ।*

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥२।३।४२॥

प्रागुपदिष्टब्रह्मानन्यत्वसिद्धय एव जीवस्य तदंशत्वमिदानीं प्रतिपादयति । तत्राऽयं जीवो ब्रह्मणोऽत्यन्तभिन्न उतोपहितं ब्रह्मैवाहोस्विद्ब्रह्मांश एवेति संशय । किं युक्तम् ? अत्यन्तभिन्न इति । कथमवगम्यते । "पृथगात्मानं प्रेरितारञ्च मत्वा" (श्वे०१।६) "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" ( श्वे० ४।६ ) "ज्ञाज्ञौ द्वावजावीशनीशौ" ( श्वे. १।९ ) इत्यादिषु भेदस्यैव श्रवणात् । अथवा तत्त्वमस्यादिश्रुतिविरोधेनात्यन्तभेदानुपपत्तेरुपाध्यवच्छिन्नं ब्रह्मैवात्यदेशवृत्तित्वेनाशः प्राणधारणत्वेन च जीव इति व्यपदिश्यते । परमार्थतस्तु न ब्रह्मणोतिरिक्तो जीवः । इत्येवम्प्राप्तेऽभिधीयते । अंशो नानाव्यपदेशादिति । अयं जीवो ब्रह्मांश एव । कुतः? नानात्वव्यपदेशादेकत्वव्यपदेशाच्च । "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" (श्वे. ६।१३) "य आत्मनि तिष्ठन् यस्यात्मा शरीरम्" (बृ. ३।७।२२) " पतिं विश्वस्यात्मेश्वर-

रम्" इत्येवमादिश्रुतिभिर्जीवेश्वरयोरुभयोर्नित्यत्वेन, जीवकामविधातृत्वेन तयो शरीरशरीरित्वेनोपास्योपासकत्वेन नियम्यनियन्तृत्वेन भृत्यस्वामित्वेन सृज्यस्रष्टृत्वेन रक्ष्यरक्षकत्वेन च जीवपरमात्मनोर्नानात्वेनव्यपदेशात् । तत्त्वमस्यादिभिश्चैकत्वेन व्यपदेशात् । अपहतपाप्मनोऽविद्याप्रत्यनीकस्य निरवद्यनिरञ्जनस्य मायाधीशस्य सर्वज्ञस्य सर्वशक्तेः सर्वदैकरसज्ञानस्यापाधिसम्बन्धकृतजीवत्वानुपपत्ते । अपि दाशकितवादित्वमधीयत एके। एके शाखिन आथर्वणिकास्तथाऽमनन्ति "ब्रह्मदाशा ब्रह्मदासा ब्रह्मैवेमे कितव" (ब्र. सू.) इति ब्रह्मणो दाशकितवादित्वाध्ययनेन तस्य सर्वजीवव्यापित्वेन सर्वाऽभेद ज्ञापयन्ति। 'सर्वं समाप्नोषि ततोऽसि सर्व" (गी० ११।) इति च सर्वव्यापकत्वेन ब्रह्मण सर्वाभेदस्य स्मरणात्। न च 'एकोऽहं बहु स्याम" इत्येकस्यैव ब्रह्मणो बहुभवनत्वश्रुतेर्ब्रह्मण एव जीवभावाऽवगमात्सर्वथा तयोरभेद जीवस्य ब्रह्मांशत्वव्यपदेश इति वाच्यम्। केवलब्रह्मणो बहुभवनसकल्पपूर्वकजगत्कारणत्वाङ्गीकारे ब्रह्मणि विकारित्वसुखदुःखभोक्तृत्वादिदोषाणामापत्ते । सृष्टेर्वैयर्थ्यापत्तेश्च । तस्माच्चिदचिद्वस्तुशरीरकस्यैव ब्रह्मणो जगत्कारणत्वम् । तथा सति विकारित्वादिदोषाणामचिदंशे पर्यवसानात्सुखदुःखभोक्तृत्वादीनाञ्च चिदंशे जीवे पर्यवसानाद्ब्रह्मणो निर्दोषत्वसिद्धे । न वा सृष्टेर्वैयर्थ्यम्। जीवमुक्तिमुक्त्यर्थकत्वेन सार्थक्यात्। तस्माज्जीवब्रह्मणो स्वरूपत. स्वभावतश्च भेदान्नानात्वव्यपदेशस्तयोर्व्याप्यव्यापकत्वेन जीवस्य ब्रह्मणोऽपार्थक्यात्तदव्यतिरेकादनानात्वव्यपदेश इत्युभयविधव्यपदेशापपत्तये ब्रह्माऽशोऽय जीव इत्युपपन्नतरम् । सूत्रेश इत्येकवचनं जात्यभिप्रायेण ।।२।३।४२।।

मन्त्रवर्णाच्च ।।२।३।४३।।

"पादोऽस्य विश्वाभूतानि त्रिपादस्यामृत दिवि" (पु. सू.)

इतिमन्त्रवर्णाश्च ब्रह्मांशा जीवा । मन्त्रे पादशब्दो ह्यंशवाची ॥२।३।४३॥

## अपि स्मर्यते ॥२।३।४४॥

स्मर्यतेपीत्यन्वय । "ममैवांशो जीवलोके जीवभूत ।" (गी १५।७) इति स्मर्यतेऽपीत्यर्थ ॥२।३।४४॥

जीवस्य ब्रह्मांशतया ब्रह्मैकदेशत्वेन जीवदोषाणां ब्रह्मणि प्रसक्तिमाशङ्क्याह—

## प्रकाशादिवत्तु नैवं परः ॥२।३।४५॥

तुशब्द शङ्कानिवर्तक । प्रकाशादिवज्जीवा ब्रह्मांश । यथा सूर्यादे भारूपप्रकाशवान् सूर्यादिरिति विशेषणत्वेनापपन्न सूर्यादीनामंश इत्यभिधीयते । यथा च देहिनो देवमनुष्यादिर्देहोऽश । तद्वदेकवस्त्वेकदेशस्य तद्वस्तुनोंशत्वव्यवहार । विशिष्टस्य वस्तुनो विशेषणमंश एव । एव जीवस्य परमात्मशरीरत्वेन विशेषणत्वात्पर मात्मनोंऽश एव जीव । अस्ति च शास्त्रीयो व्यवहारो विशेषणे 'विशेष्यांऽशोयम्' इति । जीवपरमात्मना स्वरूपस्वभावयोर्भेदान्न जीवदोषाणा परमात्मनि प्रसक्तिरित्याह—नैव पर इति । यथा स्वभावो जीवस्तथा स्वभावो न परमात्मेत्यर्थ । यथा प्रभाया प्रभावानर्थान्तरभूतस्तथा प्रकृतेऽप्यंशांशिभाव । तथा चेममेव भेदमवलम्ब्य भेदश्रुतीनाम्प्रवृत्ति । जीवपरमात्मनो व्याप्यव्यापक त्वेन जीवस्य परमात्मनोऽपृथक्सिद्धतयाऽपृथक्सिद्धविशेषणाना विशेष्यपर्यन्तत्व स्वीकृत्य 'तत्त्वमसि' इत्याद्यभेदश्रुतीनामपि मुख्या र्थत्वेनैव सार्थक्यमिति ॥२।३।४५॥

## स्मरन्ति च ॥२।३।४६॥

स्मरन्ति चाशिन परमात्मनोंशभूतजीवगतदोषाणामप्रसक्तिम्। व्यासादय "तत्र य परमात्मासौ स नित्यो निर्गुण स्मृत ।

न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा" ( वि० पु० ) "कर्मात्मा-त्वपरो योऽसौ मोक्षबन्धैः स युज्यते" इत्यादिना । चशब्देन "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" (श्वे० ४।६) इत्यादि श्रुतयोपि गृहीता भवन्ति ॥२।३।४६॥

## अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥२।३।४७॥

ननु सर्वेषां जीवानां ब्रह्मांशत्वे समाने कस्यचिद्वेदाध्ययनादि-ष्वनुज्ञा कस्यचित्परिहार इति कथमत आह—अनुज्ञेत्यादि । सर्वेषां जीवानां ब्रह्मांशत्वेनैकरूपत्वेऽपि ब्राह्मणशूद्रयोः पुण्यपाप देह सम्बन्ध-हेतुकावनुज्ञापरिहारौ । यथाऽग्नेरग्नित्वेनैकरूपत्वेऽपि यज्ञीयादेरग्नेर्ग्र-हणानुज्ञा श्मशानसम्बन्धिनोऽग्नेः परिहारस्तथा ब्राह्मणस्य वैदिके ऽनुज्ञा शूद्रादेः परिहार इत्युपपद्यते ॥२।३।४७॥

## असन्ततेश्चाव्यतिकरः ॥२।३।४८॥

एवं ब्रह्मांशत्वेन साम्येऽप्यात्मनोऽणुत्वेन प्रतिशरीरं भिन्नत्वा-त्परस्परमसन्ततेरसम्बन्धाज्ज्ञानसुखादिधर्माणामव्यतिकरोऽसाङ्कर्य-मेवेति व्यवस्था । उपहितब्रह्मजीववादे विवर्तवादे च जीवपरयोः स्वरूपस्याभेदाज्जीवानां विभुत्वेन परस्परमभेदाच्च धर्माणां व्यति-करोऽनिवार्यः स्यात् ॥२।३।४८॥

## आभास एव च ॥२।३।४९॥

नन्वज्ञाननिबन्धनोपाधिभेदान्न धर्मव्यतिकर इत्यत्राह—नित्य-स्वप्रकाशस्वरूपस्य ब्रह्मणोऽज्ञानोपहितत्वप्रतिपादने हेतव आभासा एव स्युः । कुतः ? प्रकाशस्वरूपस्य तस्याविद्यया स्वरूपतिरोधानं स्वरूपनाश एव पर्यवस्यति । चकारात् "पृथगात्मानं प्रेरितारञ्च मत्वा" ( श्वे० १।६ ) इत्यादिश्रुतिविरोधोऽपि ॥२।३।४९॥

## अदृष्टानियमात् ॥२।३।५०॥

अदृष्टैस्तद्धेतुकोपाधिभिश्च देशकालवस्तुपरिच्छेदरहितस्य ब्रह्मणश्छेदासम्भवात्तत्कृतानां दोषाणां ब्रह्मणि प्रसक्तिरनिवार्या ॥२।३।५०

## अभिसन्ध्यादिष्वपि चैवम् ॥२।३।५१॥

तत्तदन्तःकरणोपहितात्मप्रतिनियतादृष्टजन्मस्वभिप्रायविशेषेषु स्वीक्रियमाणेष्वपि परिच्छिन्नोपाधिब्रह्मव्यतिरिक्तस्य कस्यचिदपि पदार्थस्याभावादुपाधिविशिष्टम्ब्रह्मैवेति न दोषनिर्मुक्तिः ॥२।३।५१॥

## प्रदेशभेदादिति चेन्नान्तर्भावात् ॥२।३।५२॥

उपहितं ब्रह्मजीवप्रदेशादनुपहितं ब्रह्मप्रदेशस्य भेदान्न प्रदेशान्तरस्थस्य जीवस्य दोषाः प्रदेशान्तरस्थे ब्रह्मणि प्रसज्यन्त इति चेन्न । औपाधिकं ब्रह्मजीवप्रदेशानामनुपहितापरिच्छिन्नसर्वव्यापकं सर्वकालं सर्ववस्तु सर्वदेशगतानवच्छिन्नब्रह्मप्रदेशान्तर्भावाद् ब्रह्मणि जीवदोषप्रसक्तिरनिवार्येत्यर्थः । तस्मादस्मत्पक्ष एव सर्वदोषरहितः ॥२।३।५२॥

*इत्यंशाधिकरणम् ।*

इतिश्रीकान्यकुब्जाद्वजोत्तमकुलोत्तसगुणपुरुषतरनाभिशविरक्तवैष्णवप्रवर
श्रीसम्प्रदायाभिवर्धकायोध्यकबिन्दु आपीठसंस्थापक
श्रीमद्रामानन्दाचार्यश्रीरामप्रसादस्वामिकृत
ब्रह्मसूत्रभाष्यदीप श्रीजानकीकृपाभाष्य
संक्षिप्तसारे द्वितीयाध्यायस्य
तृतीय पादः ॥ ३ ॥

*श्रीभगवद्रामप्रसादाचार्यप्रणीत श्रीजानकीकृपाभाष्यस्य संक्षिप्तसारे*

## द्वितीयाध्यायस्य चतुर्थः पादः ।

( *अथ प्राणोत्पत्त्यधिकरणम्* )

एवमतिक्रान्ते पादे जीवस्य भोगायतनभूतस्थूलदेहोपादकानामाकाशादिभूतानामुत्पत्त्यादिकं विचिन्त्य जीवस्वरूपं तद्धर्माश्च विचिन्तिता । अथ लिङ्गशरीरविषयकश्रुतिविरोधपरिहारेण जीवोपकरणानामिन्द्रियाणां प्राणस्य चोत्पत्त्यादिप्रकारो विशोध्यते—

### तथा प्राणाः ॥२।४।१॥

तत्र प्राणाः जीववन्नोत्पद्यन्त आहोस्विद्वियदादिवदुत्पद्यन्त इति संशयः । किं युक्तम् ? नोत्पद्यन्त इत्येव । कुतः ? "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" (तै. २।१) इत्याद्युत्पत्तिप्रकरणे प्राणोत्पत्त्यश्रवणात् । एवमन्यत्रापि "असद्वा इदमग्र आसीत्तदाहुः किं तदासीदिति ऋषयो वाव ते अग्रे सदासीत्तदाहुः के ते ऋषय इति प्राणावाव ऋषय इति" ( शतप० ६।१।१ ) इति ऋषिपदाभिधेयप्राणानामुत्पत्तेः प्रागपि श्रूयमाणत्वात् । इति प्राप्तेऽभिधीयते— तथा प्राणा इति । वियदादिवदेव प्राणा उत्पद्यन्ते । कुतः ? "एतस्माज्जायते प्राणः मनः सर्वेन्द्रियाणि च" ( मु. २।१।३ ) इति प्राणादीनामपि परमात्मन उत्पत्तिश्रवणात् । "आत्मा वा इदमेक एवाग्र आसीत्" ( ऐत० १।१।१ ) इति सृष्टेः प्रागेकस्यैव ब्रह्मणोऽवस्थितेरवधारणात् । एतस्याः श्रुतेरेकवाक्यतासम्पादनार्थमृषिश्रुतेः परमात्मपरत्वेन नेतव्यत्वात् ।

"सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" (छा० १।११।५) इत्यादौ प्राणशब्देन परमात्मन एव

ग्रहणात्। एवमृषिशब्दश्च परमेश्वरस्यैव वाचको नेन्द्रियादीनाम् ॥ २।४।१ ॥

## गौण्यसम्भवात् ॥२।४।२॥

अथैव "तस्माद्वा एतस्मादात्मन आकाश. सम्भूतः" (तै०२।१) इत्युत्पत्तिप्रकरणे प्राणानामुत्पत्त्यश्रवणादुत्पत्तिश्रुतिर्गौणी स्यात् तत्राह— गौण्यसम्भवात्। गौण्या असम्भवस्तस्मात्। नहि प्राणोत्पत्तिश्रुतिर्गौणी सम्भवति। बाहुल्येन तत्र तत्र श्रवणात्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधाच्च ॥ २।४।२ ॥

## तत्प्राक्श्रुतेश्च ॥२।४।३॥

इतोऽपि प्राणोत्पत्तिश्रुतिर्मुख्यैव। "एतस्माज्जायते प्राणो मन. सर्वेन्द्रियाणि च। खं वायुर्ज्योतिराप पृथिवी विश्वस्य धारिणी" (मु० २।१।३) इति श्रुतावेकमेव 'जायते' इति पदं सर्वत्रान्वेति। तत्र प्राणेष्वेव प्राक्श्रुतम्। खादिषु तु पश्चादन्वेति। न ह्येकमेवपदं सकृदुच्चरितं क्वचिद्गौणं क्वचिच्च मुख्यं स्यात्। वैरूप्यप्रसङ्गात्। तस्मात् प्राणानामुत्पत्तिश्रुतिर्मुख्या ॥ २।४।३ ॥

## तत्पूर्वकत्वाद्वाच ॥२।४।४॥

वाच परमात्मव्यतिरिक्तस्य वागादीन्द्रियजातस्य तत्पूर्वकत्वात्-वाग्विषयभूतनामरूपात्मकाकाशादिसृष्टिपूर्वकत्वात्। "अन्नमयं हि सोम्य मन आपोमय प्राणस्तेजोमयी वाक्" (छा० ६।५।४) इति श्रुतौ मनस प्राणस्य च वाचश्च तेजोबन्नजन्यत्वश्रवणात्। "ऋषयो वाव ते अग्रे सदासीत् प्राणा वाव ऋषय" इति प्रलयकालीनस्य प्राणशब्दस्य वाच्य परमात्मैव ॥ २।४।४ ॥

*इति प्राणोत्पत्त्यधिकरणम् ॥*

*अथ सप्तगत्यधिकरणम् ।*

## सप्त गतेर्विशेषितत्वाच्च ॥२।४।५॥

'स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्ततेऽथारूपज्ञो भवति । एकीभवति न पश्यतीत्याहुरेकीभवति । न जिघ्रतीत्याहुरेकीभवति । न रसयत इत्याहुरेकीभवति । न वदतीत्याहुरेकीभवति । न शृणोतीत्याहुरेकीभवति । न मनुत इत्याहुरेकीभवति । न स्पृशतीत्याहुरेकीभवति । न विजानातीत्याहुः" इति चक्षुरादीनां सप्तानां गतेर्विशेषितत्वात् । 'सप्त प्राणाः प्रभवन्ति तस्माद्" इति श्रोत्रादीनि ज्ञानेन्द्रियाणि मनो बुद्धिश्चेति सप्तानामेव जीवेन सह गतेर्विशेषितत्वाच्छरीरत्यागेऽपि तेषां जीवसहचारित्वाच्छरीरत्यागानन्तर जीवसहचारिभ्यः कर्मेन्द्रियेभ्यस्तेषां प्रधानत्वेन सप्तैवेति व्यपदेशः ॥ २।४।५ ॥

अथ सिद्धान्त.—

## हस्तादयस्तु स्थितेऽतो नैवम् ॥२।४।६॥

तु शब्दः प्राणानां सप्तत्वनिरासार्थः । श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि वाग्घस्तादीनि च पञ्च कर्मेन्द्रियाणि मनश्चेत्येकादश । बुद्ध्यहङ्कारयोरन्तःकरणभेदत्वान्नाधिकसंख्यापादकत्वम् । "तमुत्क्रान्तम्" इति श्रोत्रादीनां सप्तानामुत्क्रान्तिश्रुतेस्तानि जीवेन सह शरीरान्तर्गमनेऽपि गच्छन्ति । वाग्घस्तादीनि कर्मेन्द्रियाणि तु स्थिते—शरीरस्थिते जीवे तस्य भोगोपकरणानीत्येकादशेन्द्रियाणि । अतो नैवम्—अत इन्द्रियाणामेकादशत्वात् सप्तैवेन्द्रियाणीति नैव वाच्यम् ॥ २।४।६॥

*इति सप्तगत्यधिकरणम् ।*

*अथ प्राणाणुत्वाधिकरणम् ।*

## अणवश्च ॥२।४।७॥

"त एते सर्व एव समाः सर्वेऽनन्ता" इतीन्द्रियाणामानन्त्य श्रुत्या सर्वगतत्वे प्राप्त आह—अणवश्चेति । अनूत्क्रमणश्रवणात् प्राणा अणवः । आनन्त्यश्रुतिस्तु "अथ यो ह वैतानननन्तानुपास्ते" इत्युपासनविधानादुपासनफलबाहुल्यविषया ॥२।४।७॥

*इति प्राणाणुत्वाधिकरणम् ।*

---

*अथ श्रैष्ठ्याधिकरणम् ।*

## श्रेष्ठश्च ॥२।४।८॥

वागादीन्द्रियाणां स्वरूपस्थितेः प्रवृत्तेश्च मुख्यप्राणाधीनत्वस्य छान्दोग्यादिश्रुतिपूपदिश्यमानत्वाद्वागादिभ्यस्तस्य श्रेष्ठत्वात्, श्रेष्ठ प्राण उत्पद्यते न वेति संशये नोत्पद्यते । कुतः ? "आनीदवातम्" इत्यत्र महाप्रलये आनीदितिपदेन प्राणसंचारस्य श्रवणात्संचारवत प्राणस्य प्रलयेऽपि वर्तमानत्वात् । एवं प्राप्त आह—श्रेष्ठश्चेति । "एतस्माज्जायते प्राणः" इति श्रुतौ प्राणोत्पत्ति श्रवणाद् श्रेष्ठः प्राण उत्पद्यते । आनीदवातमितिश्रुतिस्तु परब्रह्मविषयिणी ॥२।४।८॥

*इति श्रैष्ठ्याधिकरणम् ।*

---

*अथ वायुक्रियाधिकरणम् ।*

## न वायुक्रिये पृथगुपदेशात् ॥२।४।९॥

किमयं मुख्यः प्राणो भूतवायुरेवोत क्रियाविशेष आहोस्वित्कोऽपि विशेषमापन्नो वायुरिति संशये किं युक्तम्—भूतपरिगणितो

वायुरेवायम् । कुत ? "य प्राण स वायु" इति श्रुते । अथ योच्छ्वासनि श्वासरूपवायुक्रियाया प्राणत्वप्रसिद्धेर्वायो क्रिया विशेष प्राण इति प्राप्त उच्यत—न वायुक्रिये इति । न वायु स्वय प्राणो न च वायो क्रिया प्राण । कुत ? पृथगुपदेशात् । एतस्मा ज्जायते प्राणो मन सर्वेन्द्रियाणि च । ख वायुर्ज्योतिराप" ( मु० २।१३ ) इति वायो प्राणस्य च पृथगुपदेशान्न वायु प्राण । न च क्रिया । तस्या पृथगुपदेशासम्भवात् । अपि तु देहधारण योग्यतारूपविशेषमापन्नोवायुरेव प्राणो देहेन्द्रियधारणरूपजीवो पकारित्वाधिक्यात् । तस्य चक्षुरादिकरणै सह जीवोपकरणत्वोप देशेपि चक्षुरादिभ्य प्रधानत्वात् । तदन्वयव्यतिरेकाभ्यामपि चक्षु रादिप्रवृत्तेस्तत्प्रवृत्तेश्च दर्शनाच्चक्षुरादिभ्यस्तत्प्रधानत्वनिष्पत्तेर्न क्रियामात्र प्राण ॥२।४।९॥

यदि प्राणो न वायुर्न च तत्क्रिया तर्हि तेजोप्पृथिवीवद्भूता न्तरत्व स्यादित्यत्राह—

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥२।४।१०॥

तुशब्दश्चोद्य व्यावर्तयति । नाय प्राणोऽग्न्यादिवत्तत्वान्तर मिन्त्यवस्थान्तरमापन्नोवायुरेव चक्षुरादिवज्जीवोपकरणभूत । कुतो ऽवगम्यते ? तत्सहशिष्ट्यादिभ्य । जीवोपकरणभूतैश्चक्षुरादिभिस्सह प्राणस्य शिष्टे शासनादित्यर्थ । समानजातीयानामेव सहशासनस्य योग्यत्वात् ॥२।४।१०॥

## अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥२।४।११॥

करण क्रिया । अकरणत्वात्प्राणस्य जीवोपकारभूतक्रियाविशेष रहितत्वाद्वायो क्रियाविशेष प्राण इति यो दोष सभाव्यते स नोप पद्यते । कुत ? प्राणस्य जीवशरीरेन्द्रियधारणरूपतदुपकारविशेष

भूतक्रियावत्त्वात्। तथा हि दर्शयति। "को न श्रेष्ठ इति तान् होवाच यस्मिन्नुत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्यते स व श्रेष्ठ" ( छा० ५।१।७ ) इत्यस्मिन् प्रकरणे प्राणस्यैव प्राणापानाद्याकारेण पञ्चधाऽवस्थितस्य शरीरेन्द्रियधारणद्वारा जीवस्योपकारकत्वाच्चक्षुरादिवत्तत्करणत्वं दर्शयति श्रुति ॥२।४।११॥

प्राणापानादिविभागेन पञ्चधावस्थितस्यैकस्य प्राणस्य न केवलं देहेन्द्रियधारणमेवासाधारणं कार्यं किन्त्वन्यदपीत्याह—

पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥२।४।१२॥

यथा "कामः सङ्कल्पो विचिकित्सा" ( बृ० १।५।३ ) इत्यादौ कामादिवृत्तिभेदेनैकमेव मनः कामादिशब्दैः श्रुत्याभिधीयते तथा प्राणोऽपि प्राणापानव्यानोदानसमानरूपेण तत्तद्वृत्तिभेदेनोच्छ्वासनिश्वासशरीरक्रियोत्क्रान्तिरूपाणिकार्याणिभक्षिताशितादिरसानांसर्वाङ्गेषु समत्वेन नयनरूपं कार्यं च कुर्वन् जीवशरीरेन्द्रियाणामुपकारं कुर्वन् जीवस्योपकरणं भवति ॥२।४।१२॥

*इति वायुक्रियाधिकरणम् ।*

---

*अथाणुत्वाधिकरणम् ।*

अणुश्च ॥२।४।१३॥

"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" ( बृ० ४।४।२ ) इत्यादिश्रुतेः प्राणस्याणुत्वे निश्चिते "सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण" "प्राणे सर्वं प्रतिष्ठितम्" इत्यादि श्रुतिर्न प्राणस्य महत्परिमाणत्वं बोधयति; अपितु सर्वस्य प्राणायत्तस्थितिप्रवृत्तित्वेन प्राणस्य सर्वप्रधानत्वमित्यवगन्तव्यम् ॥२।४ १३॥

*इत्यणुत्वाधिकरणम् ।*

---

*अथ ज्योतिराद्यधिष्ठानाधिकरणम् ।*

## ज्योतिराद्यधिष्ठानन्तु तदामननात् ॥२।४।१४॥

अधिष्ठानमधिष्ठातृत्वम् । जीवेन सह ज्योतिरादग्न्याद्वागा दीन्द्रियाधिष्ठान तदाधष्ठितत्व परमात्मायत्तमेव । कुत ? तदामननात् । आमननमाभिमुख्येन मनन सकल्प इत्यर्थ । तस्य परमात्म शरीरत्वेन तदधीनस्वरूपस्थितिप्रवृत्तीना जीवग्न्याग्न्यादिदेवाना च परमात्मसकल्पेनैवार्थतो वागादीन्द्रियाधिष्ठितत्वादरामननात् । तथा च श्रुत —य आत्मनि तिष्ठन् यस्यात्मा शरीरम्, य आन्त्यि तिष्ठन् यस्यादित्य शरीरम्, यश्चक्षुषि तिष्ठन् यस्य चक्षु शरीर मित्यादि ॥२।४।१४॥

यद्येव जावेन सहाग्न्यादीना देवतानामेवाधिष्ठातृत्व तर्हि अग्न्यादीनामपि भोक्तृत्व स्यान्न जीवस्यवत्यत आह—

## प्राणवता शब्दात् ॥२।४।१५॥

प्राणवता जीवेनैवेन्द्रियाणा स्वस्वामिसम्बन्धस्तेनेन्द्रियसाध्य-भोगभाग् जीव एवेत्यर्थ । कुत ? शब्दात् । "अथ यत्रैतदाकाश मनुविषण्ण चक्षु स चाक्षुष पुरुषो दर्शनाय चक्षुरित्यादि श्रुते ॥२।४।१५॥

## तस्य च नित्यत्वात् ॥२।४।१६॥

तस्य सर्वशरीरस्य परमात्मन सर्वनियमनस्य नित्यत्वात्तत्स-ङ्कल्पादेव जीवस्याग्न्यादीना च तत्तदिन्द्रियाधिष्ठातृत्वमित्यर्थ । चकाराज्जीवस्य स्वकर्मोपार्जिते देहे कर्तृत्वस्य कर्मफलभोक्तृत्वस्य च नित्यत्वाज्जीवो भोक्ता । देहेन्द्रियाणामग्न्यादिकर्मोपार्जितत्वा भावान्न तेषामग्न्यादीना भोक्तृत्वमस्मिञ्छरीर इत्यर्थ ॥२।४।१६॥

*इति ज्योतिराद्यधिष्ठानाधिकरणम् ।*

*अथेन्द्रियाधिकरणम् ।*

**त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥२।४।१७॥**

किं प्राणशब्दनिर्दिष्टा ये ते सर्वे एवेन्द्रियाणि किं वा श्रेष्ठप्राण व्यतिरिक्ता ये प्राणशब्दनिर्दिष्टा त इति संशये किं युक्तम् ? सर्वेषां प्राणशब्दवाच्यत्वाविशेषात्सर्वे इति प्राप्त उच्यते–अन्यत्र श्रेष्ठात् । श्रेष्ठान्मुख्यप्राणादन्यत्रान्ये ते प्राणशब्दनिर्दिष्टा वागादय इन्द्रियाण्युच्यन्ते न मुख्यप्राण इन्द्रियमित्युच्यत इत्यर्थः । कुतः ? तद्व्यपदेशात् । "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इत्यत्र भेदेनोत्पत्तेर्व्यपदेशात् ॥२।४।१७॥

**भेदश्रुतेर्वैलक्षण्याच्च ॥२।४।१८॥**

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति समनस्केभ्य इन्द्रियेभ्यो भेदेन प्राणोत्पत्तेः श्रुतेः श्रवणात् । वैलक्षण्याच्च । सुषुप्तिमूर्छादाविन्द्रियाणामुपरामकालेऽपि निश्वासोच्छ्वासात्मप्राण वृत्तेर्दर्शनादिन्द्रियवृत्तिभ्यः प्राणवृत्तेर्वैलक्षण्याच्च । आभ्यां हेतुभ्यां श्रेष्ठात्प्राणात्ते प्राणशब्दनिर्दिष्टा वागादयोऽन्य इत्यर्थः ॥२।४।१८॥

*इतीन्द्रियाधिकरणम् ।*

---

*अथ संज्ञामूर्तिक्लृप्त्यधिकरणम् ।*

**संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥२।४।१९॥**

एवं भूतेन्द्रियप्राणानां समष्टिसृष्टिमभिधाय व्यष्टिसृष्टिरिदानीं चिन्त्यते । तत्र यदिदं नामरूपव्याकरणं तत्समष्टिजीवस्य हिरण्य गर्भस्यैव कर्माहोस्वित्तच्छरीरकस्य परमात्मन इति संशयः । तत्र समष्टिजीवस्यैवैतत्कर्म भवितुमर्हति । कुतः ? 'अनेन जीवेनाऽऽत्मना

ऽनुप्रविश्य नामरूपे व्याकरवाणि" ( छा० ६।३।२ ) इति जीवस्यैव तत्कर्तृत्वश्रवणात्।

इति प्राप्तेऽभिधीयते-सञ्ज्ञामूर्तिक्लृप्तिस्त्विति-तुशब्दो जीवकर्तृत्वनिरासार्थं । "तासां त्रिवृत त्रिवृतमेकैका करवाणि" ( छा० ६।३।२ ) इति त्रिवृत्कुर्वत परमात्मन एव सञ्ज्ञामूर्तिक्लृप्तिर्नामरूपव्याकरण कार्यं भवितुमर्हति। कुत ? उपदेशात्। "सेय देवतैक्षत हन्ताहमिमास्तिस्रो देवता, अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि। तासां त्रिवृतं त्रिवृतमेकैका करवाणि" ( छा० ६।३।२ ) इति नामरूपव्याकरणस्य च परदेवताकर्तृकत्वोपदेशात्। अत्र त्रिवृत्करणं परस्यैव ब्रह्मणो नतु हिरण्यगर्भस्य। एवञ्च तत्समानकर्तृकत्वान्नामरूपव्याकरणं परमात्मन एव कर्मेति निश्चीयते ॥२।४।१९॥

'यथा नु खलु सोम्येमास्तिस्रो देवता · " इत्यादित आरभ्य "यद्विज्ञातमिवाभूदित्येतासामेव देवतानां समासः" इत्यन्तेन तेजोबन्नाना बाह्यत्रिवृत्करणमुक्त्वा तासामेव देवतानामध्यात्ममपर त्रिवृत्करणमुक्तम् 'यथा खलु सोम्येमास्तिस्रो देवता पुरुष प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीही" त्यादिना। एवम् "अन्नमशित त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मास योणिष्ठस्तन्मन " इत्यादिना यत्तेजोबन्नाना परमात्मना त्रिवृत्कृतानामध्यात्म त्रिवृत्करण तदपि परमात्मकार्यम्। तदन्यस्य तत्कर्तुमशक्यत्वादिति ज्ञापयति—

## मासादि भौमं यथाशब्दमितरयोश्च ॥२।४।२०॥

पुरुषेणाशिताया व्रीहियवादिरूपाया भूमे कायत्रय शरीरे वर्तते पुरीष मास मनश्चेति। तद्भौममित्युच्यते। मासादित्यादि शब्दन पुरीषमनसी गृह्येते। एवमितरयोरप्तेजसोश्च यथाशब्द यथा श्रुत्योक्त मूत्रं लोहित प्राणश्चेत्यपा कार्यत्रयम्। अस्थि मज्जा वागिति तेजसः

कार्यत्रय बोध्यम् । तत्र वायु कार्यत्वेन प्रसिद्धस्य प्राणस्य जलाधीन स्थितिकत्वमात्रेण जलकार्यत्व व्यपदेश । एवमन्नभक्षणेन मनस स्वास्थ्यमात्रेण तत्कार्यत्वव्यपदेश । वाचोपि ज्ञानानुकूलत्वसाम्येन तेज कार्यत्वव्यपदेश । तत्र जीवस्यान्नजलाद्यशनपानादि कर्तृत्वेपि तत्पचनपुरीषमासादित्रिवृत्करणहेतु परमात्मैव ॥२।४।२०॥

ननु सर्वेषा पदार्थाना त्रिवृत्कृतत्वेन सर्वेपि पृथिव्यप्तेजस्वरूपा । अतस्ते सर्वेपि पृथिव्यप्तेजश्शब्दैर्वक्तव्या न त्विय पृथिवी, इमा आप, इद तेज इत्याशङ्क्याह—

## वैशेष्यात्तु तद्वादस्तद्वादः ॥२।४।२१॥

तुशब्द उक्तशङ्कानिवर्तक । सर्वेषा पृथिव्यप्तेजसा त्रिवृत्करणत्वाविशेषेऽपि वैशेष्यात्स्वस्वभागाधिक्यात्तद्वाद पृथिव्यादिवाद । यत्र पृथिव्या भागाधिक्य सा पृथिवीत्युच्यत । यत्रापा भागाधिक्य ता आप इत्युच्यन्ते । यत्र तेजसो भागाधिक्य तत्तेज इत्युच्यते । अभ्यासोऽध्यायपरिसमाप्त्यर्थ ॥२।४।२१॥

*इति सज्ञामूर्तिक्लृप्त्यधिकरणम् ।*

इतिश्रीकान्यकुब्जद्विजोत्तमकुलोत्तसगुणपुरुषलब्धाभग्नविरक्तवैष्णवप्रवर
श्रीसम्प्रदायाभिवर्धकायोध्याबिन्दु श्रीपीठसस्थापक
श्रीमद्रामानन्दीयाचार्यश्र रामप्रसादस्वामिकृत
ब्रह्मसूत्रभाष्यदीपे श्रीजानकीकृपाभाष्य
साक्षतसारे द्वितीयाध्यायस्य
चतुर्थ पाद ॥४॥

*श्रीभगवद्रामप्रसादाचार्य प्रणीतस्य शारीरकमीमांसायां*
*श्रीजानकीकृपाभाष्यस्य संक्षिप्तसारे*

## तृतीयाध्यायस्य प्रथमः पादः ।

*अथ तदन्तरप्रतिपत्त्यधिकरणम् ।*

जीवोपकरणभूताना भौतिकाना पदार्थाना कर्ता परमात्मेत्युक्तम् । इदानीं देहान्तरारम्भकैर्भूतसूक्ष्मै परिष्वक्त एव जीवो लोकान्तर गच्छतीत्याह—

### तदन्तरप्रतिपत्तौ रहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥३।१।१॥

किमय जीवो देहान्तरारम्भकैर्भूतसूक्ष्मैर्मुख्यप्राणादीनामाधार भूतैरसयुक्तो देहान्तरं गच्छत्याहोस्वित्सम्परिष्वक्त इति सशये । असम्परिष्वक्त एव गच्छति । देहान्तरारम्भकाणा भूतसूक्ष्माणां सर्वत्र सुलभत्वादिति प्राप्तेऽभिधीयते–तदन्तरप्रतिपत्तौ रहति सम्परिष्वक्त प्रश्ननिरूपणाभ्यामिति। पूर्वसूत्र (२।४।१९) मूर्तिशब्दा देह उच्यते तस्यैवात्र सूत्र तत्पदेन ग्रहणम् । तथा च देहान्तरगमने तदारम्भकैर्भूतसूक्ष्मै सम्परिष्वक्त एव जीवो रहति गच्छति । कुतश्चैतदवगम्यते ? प्रश्ननिरूपणाभ्याम् । प्रश्नेन तदुत्तरेण चाव गम्यते । पञ्चाग्निविद्याया छान्दोग्ये श्रूयते "श्वेतकेतुर्हारुणेय पञ्चालानां समितिमेयाय तश्ह प्रवाहणो जैवलिरुवाच" वेत्थ 'यथा पञ्चम्यामाहुतावाप पुरुषवचसो भवन्तीति' (छा ५।३।१।३) इत्यादिकम् । तत्र प्रवाहणेन राज्ञाऽरुणेय श्वतकेतुम्प्रति पञ्च प्रश्ना कृता । तेष्वन्तिम प्रश्न "वेत्थ यथा पञ्चम्यामाहुतावाप पुरुष वचसो भवन्ति" इति । अस्य च प्रतिवचन "असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समित्" (छा० ५।४।१) इत्यादिना

कृतम्। तत्र हि द्युलोकपर्जन्यपृथिवीपुरुषयोषारूपास्वग्निषु श्रद्धा सामवर्षान्नरेतसामाहुती समुपवर्ण्योक्त' इति तु पञ्चम्यामाहुतावाप पुरुषवचसो भवन्ति" (छा० ५।९।१) इति। इत्थं पूर्वोदितासु सर्वास्वप्याहुतिषु सूक्ष्मरूपेणानुवर्तमानाना श्रद्धापदव्यपदेश्या-नामेवापा पुरुषशब्दबोध्यत्वमभिहितम्। एवञ्चाभ्या प्रकृतप्रश्न प्रतिवचनाभ्यामबादिभूतसम्परिष्वक्तोजीवो रहति देहान्तरमुपयाती त्यवगम्यते ॥३।१।१॥

ननूक्तप्रश्ननिरूपणाभ्यामद्भि परिष्वक्तो जीवो गच्छति "आप पुरुषवचसो भवन्ति" इत्यभिधानात्। परन्तु तस्याबितरभूतपरि-ष्वङ्गानुपपत्तिरित्याशङ्कयाह—

## त्र्यात्मकत्वात्तु भूयस्त्वात् ॥३।१।२॥

तु शब्द शङ्कानिवर्तक। अपा त्रिवृत्करणश्रुत्या त्र्यात्मक त्वात्। "आप पुरुषवचस" इति च भूतान्तरसमृष्टा आपोऽभि धीयन्ते। तत्रापा भूयस्त्वादाधिक्यात्केवलाप्शब्देनैवाभिधानमुप पद्यते ॥३।१।२॥

## प्राणगतेश्च ॥३।१।३॥

"तमुत्क्रामन्त प्राणाऽनूत्क्रामति प्राणमनूत्क्रामन्त सर्वे प्राणा अनूत्क्रामन्ति" (बृ० ६।४।२) इति। तथा "शरीर यदवाप्नोति यच्चाप्युत्क्रामतीश्वर। गृहीत्वैतानि सयाति वायुर्गन्धानिवाशयात्" (गी०) इति स्मृतेश्च जीवोत्क्रमणकाले मुख्यप्राणसहितानामि-न्द्रियाणामपि तेन सह गतिश्रवणात्स्मरणाच्चेन्द्रियाणा देहाश्रितत्वेन देहारम्भकाणा भूतसूक्ष्माणामपि गमनाद् भूतपरिष्वक्त एव जीवो रहतीति ॥३।१।३॥

## अग्न्यादिगतिश्रुतेरितिचेन्न भाक्तत्वात् ॥३।१।४॥

ननु "यत्रास्य पुरुषस्य मृतस्याग्नि वागप्येति वात प्राणश्च-

क्षुरादिलम्" (बृ० ५।२।१३।) इत्यादिना वागादीनामग्न्यादिषु लयस्य श्रवणात्तेषां मरणकाले जीवेन सह गतिर्नोपपद्यत इति चेन्न, "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इति जीवेन सह वागाद्युत्क्रान्तिश्रुतिविरोधेन तेषामग्न्यादिदेवतासु लयाऽनुपपत्तेः। "यत्रास्य पुरुषस्याग्नि" मित्यादिश्रुतेर्भाक्तत्वावगमात्। तथा च नहि मृतस्य प्रत्यक्षेण दृश्यमानानां लोम्नां केशानाञ्चौषधिषु वनस्पतिषु च लयो दृश्यते। अतोऽग्न्यादिषु वागादिलयश्रुतेरौपचारिकत्वम् ॥३।१।४॥

प्रथमेऽश्रवणादितिचेन्न ता एव ह्युपपत्तेः ॥३।१।५॥

प्रथमे द्युलोकाख्याग्नावपामाहुतेरश्रवणात्किन्तु "तस्मिन्नेतस्मिन्नग्नौ देवा श्रद्धां जुह्वति" (छा० ५।४।२) इति प्रथमेऽग्नौ श्रद्धाया एवाहुते श्रवणादापो भूतान्तरसंसृष्टा गच्छन्तीति नोपपद्यत इति चेन्न। यस्मात्ता एवापः श्रद्धाशब्दवाच्या भवन्ति। कुतः? उपपत्तेः। "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" (छा० ५।३।३) इति प्रश्नवाक्येपामेवाहुते श्रवणात्। प्रतिवचनवाक्ये श्रद्धाशब्देनाप एवोक्ता भवन्ति। "श्रद्धा वा आपः" इत्यपां श्रद्धाशब्दवाच्यत्वं श्रुत्यावगम्यते ॥३।१।५॥

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥३।१।६॥

ननु 'देवा श्रद्धां जुह्वति" (छा० ५।४।२) इत्यादि प्राकरणिकेषु वाक्येष्वबादिभूतपरिष्वक्तस्य जीवस्य रंहणत्वं नोपपद्यते। कुतः? प्रश्नप्रतिवचनवाक्ययोरश्रुतत्वात्। इति चेन्न। इष्टादिकारिणां प्रतीतेः। इष्टादिकारिणां जीवानां भूतपरिष्वक्तानां रंहणत्वप्रतीतेः। "अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति" (छा० ५।१०।३) इतीष्टादिकारिणां धूममार्गेण चन्द्रलोकप्राप्तिः श्रूयते। "एष सोमो राजा" इति तत्रस्थानां सोमराजशब्देन निर्देशात्॥ ३।१।६॥

ननु "ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ती"ति श्रुतौ चन्द्रलोकगतानां भूतपरिष्वक्तानामिष्टादिकारिणामन्नत्वेन देवभक्ष्यत्वं श्रूयते। एतच्छ्रुतिविरोधेनेष्टादिकारिणां भूतपरिष्वक्तानां स्वकर्मफलभोगाय चन्द्रलोकं प्रति रंहणं नोपपद्यत इत्याशङ्कयाह—

## भाक्तं वानात्मवित्त्वात्तथा हि दर्शयति ॥३।१।७॥

वाशब्दः शङ्कानिवृत्त्यर्थः। जीवस्य स्वर्गसुखावाप्त्यर्थं 'यजेत स्वर्गकामः' इत्यादिविधिवाक्यानां विरोधेनेष्टादिकारिणामन्नत्वस्य मुख्यत्वानुपपत्तेस्तेषां देवान् प्रति किङ्करभार्यादिवद्भोगोपकरणत्वमात्रेणान्नत्ववचनं भाक्तं गौणम्। तत्तेषां देवान्प्रति गुणभावेन भोग्यत्वमुपपद्यते। कुतश्चैतादिष्टादिकारिणां भोग्यत्वमत आह— अनात्मवित्त्वात्तथा हि दर्शयति। यतस्तेन प्रकारेण तेषामनात्मवित्त्वेन देवभोग्यत्वं दर्शयति श्रुतिः "अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्" (बृ० ३।४।१०) इति पञ्चाग्निविद्याविदां च आत्मविदस्तेषामर्चिरादिना ब्रह्मप्राप्तिः श्रूयते। "तद्य इत्थं विदुः" इत्यादिना तेषामात्मज्ञानं विना ब्रह्मप्राप्त्यनुपपत्तेरात्मवित्त्वमवगम्यते। आत्मविदां स्वर्गकामनानुपपत्तेः। स्वर्गप्राप्तिकामनां विना स्वर्गप्राप्त्यनुपपत्तेर्ये धूमादिमार्गेण चन्द्रलोकं गच्छन्ति तेषामनात्मवित्त्वनिष्पत्तेरनात्मविदामिष्टादिकारिणां देवान्प्रत्यन्तभावेन भोग्यत्वमात्मवित्प्रशंसार्थं गौणमेव। तस्मात्स्वर्गसुखभोगार्थं सूक्ष्मभूतपरिष्वक्तो रंहतीति सिद्धम् ॥३।१।७॥

*इति तदन्तरप्रतिपत्त्यधिकरणम्*

*अथ कृतात्ययाधिकरणम् ।*

## कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च ॥३।१।८॥

केवलमिष्टादिकारिणां स्वकर्मफलभोगार्थं धूमादिमार्गेण सोमलोकं प्राप्तानां तत्र च भुक्तकर्मफलानां ततो निवर्तनं श्रूयते "तस्मिन् यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते" ( छा० ५।१०।५ ) इत्यादि । तत्र संशयः । किं चन्द्रमण्डलान्निवर्तमानास्ते जीवा निरनुशया एव निवर्तन्त आहोस्वित्सानुशया इति । तत्र निरनुशया एवावरोहन्तीति पूर्वःपक्षः । प्रकृतेऽनुशयशब्द आमुष्मिकफलप्रदकर्मातिरिक्तकर्मवाचकः । श्रुतौ सम्पतन्त्यनेन स्वर्गं लोकंफलभोगायेति सम्पातोऽत्रकर्माऽभिधीयते । एवञ्च 'यावत्सम्पातमुषित्वा' इति वाक्येनाखिलकर्मणामुपभोगस्तत्रैव निश्चीयते । तथा च श्रुतिः "प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे" ( बृ० ४।४।६ ) इति । तस्मात्सर्वकर्मफलभोगानन्तरमेवावरोहणान्निरनुशया एव निवर्तन्ते । इति प्राप्तेऽभिधीयते-कृतात्ययेऽनुशयवानिति । कृतस्य स्वर्गप्राप्तये कृतस्य पुण्यकर्मणो भोगेनात्यये नाशे सत्यनुशयवान् भुक्तशिष्टकर्मवानेव निवर्तते । चन्द्रमण्डलात्प्रत्यवरोहति । कुतोऽवगम्यते । दृष्टस्मृतिभ्याम् । दृष्टा श्रुतिः । सा च "तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वा" ( छा० ५।१०।७ ) इत्येवं रूपा । येऽत्र कर्मभूमौ रमणीयं पुण्यं कृतवन्तस्ते चन्द्रमण्डलादवरोहन्तो रमणीयां पुण्यां ब्राह्मणादियोनिमापद्यन्ते । ये च कपूयं कुत्सितं पापं कृतवन्तस्ते कपूयां कुत्सितां श्वशूकरादियोनिमापद्यन्त इति पुण्यपापकर्मकारिणां स्वर्गात्प्रत्यव-

रूढानां प्राक्तनकर्मयोगात्पुण्यपापरूपजन्मनां प्राप्तिं दर्शयन्ती श्रुतिर्भुक्तशिष्टं कर्मास्तीति स्पष्टयति । तथा स्मृतिरपि "वर्णा आश्रमाश्च स्वकर्मनिष्ठा. प्रेत्य कर्मफलमनुभूय तत. शेषेण विशिष्ट देशजातिकुलरूपायु श्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते" (गौतम८) इति। तत शेषेणत्यनेन सानुशयानामेव स्वर्गादवरोहणं वदति । "यावत्सम्पातमुषित्वा" इत्यस्य सकलकर्मभोगानन्तरं निवर्तन्त इति नार्थ । किन्तु स्वर्गलोकभोक्तव्यानि कर्माण्यशेषेण भुक्त्वेत्याद्यर्थ । सकलकर्मफलभोगपरत्वे तु सर्वेषा कर्मणा तत्फल-भोगेन विनाशादुत्तरजन्महेतुत्वाभावेन पुनरिह लोके प्रत्यावर्तना-ऽसम्भवात् "रमणीयां योनिमापद्येरन्" इत्यादि श्रुते 'तत: शेषेण' इत्यादिस्मृतेश्च वैयर्थ्यं स्पष्टमेव । तस्मात्सानुशयानामेवावरोहण-मिति । ते च येन क्रमेणारूढास्तनैव क्रमेणावराहन्ति क्रमान्तरेण वेति सन्देह निरस्यन्नाह—'यथेतमनेवञ्च' आरोहणप्रकारेण तद्विपर्ययेण च निवर्तन्त इति तदर्थ । धूमरात्र्यपरपक्षषण्मास-दक्षिणायनपितृलोकाकाशचन्द्रलाकक्रमेणारोहणप्रकार. । अवरोहण-प्रकारस्तु चन्द्रमस स्थानादाकाशवायुधूमाभ्रमेघप्रवर्षादि क्रमेण । तत्रारोहणमार्गे श्रुतयोर्धूमाकाशयोरवरोहणमार्गेऽपि श्रुतत्वाद्—यथेतं यथागत गमनमार्गेण निवतन्त इत्यर्थ.। आरोहणमार्गे श्रुतानां रात्र्यपरपक्षषण्मास दक्षिणायनपितृलाकानामवरोहणमार्गेऽश्रवणात् । वाय्वभ्रमेघप्रवर्षाद्यधिकश्रवणाच्च । नैव यथेत न निवर्तन्ते । गतमार्ग-विपरीतमार्गेणावरोहन्तीत्यर्थ. ॥३।१।८॥

## चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥३।१।९॥

ननु "रमणीयचरणा रमणीयां योनिमापद्येरन्" इति श्रुतस्य चरणपदस्यानुशयकर्मार्थकत्वमङ्गीकृत्य सानुशयानामवरोहण यदुक्तं तन्नोपपद्यते । कुत. ? चरणस्याचारात्मकस्य कर्मणो ब्राह्मणादि-

योनिप्राप्तिहेतुभूतस्यानुशयादतिरिक्तत्वादिति चेन्न । इय चरणश्रुतिरनुशयकर्मोपलक्षणार्थेति कार्ष्णाजिनिराचार्यो मन्यते ॥३।१।९॥

## आनर्थक्यमितिचेन्न तदपेक्षत्वात् ॥३।१।१०॥

ननु श्रुतस्य चरणस्यैव सदाचारदुराचारात्मकस्य ब्राह्मणादिश्वशूकरादिसदसद्योनिप्राप्तिहेतुत्वेन श्रुतस्यानुशयकर्मोपलक्षकत्वे तस्याकिञ्चित्करत्वेनानर्थक्य स्यादिति चेन्न । तदपेक्षत्वात् । सुख साधनस्येष्टापूर्तादेः पुण्यकर्मणश्चरणपदाभिहिताचारनिर्वर्त्यत्वेनाचारापेक्षत्वात्तस्य चार्थवत्त्वादिति । "सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु" इति स्मृतेः सर्वस्य पुण्यकर्मण. आचारापेक्षत्वात् । "आचारहीनं न पुनन्ति वेदा" इत्याचारहीनस्याशुचित्वाभिधानाच्च। तस्मात्कर्मोपलक्षणार्थेति कार्ष्णाजिनमतम् ॥३।१।१०॥

## सुकृतदुष्कृते एवेति तु बादरिः ॥३।१।११॥

तुशब्द. कार्ष्णाजिनिमतापाकरणार्थं । चरणशब्देन सुकृत दुष्कृते एवाभिधीयेते इति बादरिराचार्यो मन्यते । न हि सुकृतदुष्कृतसाधनरूपाचारे चरणशब्दः । कुत ? पुण्य कर्म करोतीति वाक्यस्थाने "धर्मं चरती"त्येवमपि प्रयुज्यते । तस्मान्मुख्य एव चरणशब्दः कर्माभिधायक । सति मुख्यार्थे लक्षणाया अन्याय्यत्वात् । आचारोऽपि धर्मविशेष एव। तस्मात्सानुशया एव निवर्तन्त इति सिद्धम् ॥३।१।११॥

इति कृतात्ययाधिकरणम् ।

*अथानिष्टादिकार्याधिकरणम् ।*

## अनिष्टादिकारिणामपि च श्रुतम् ॥३।१।१२॥

इष्टादिकारिणां चन्द्रमण्डलगमनमुपवर्णितम् । अथानिष्टादिकारिणां पापकर्मणां गतिश्चिन्त्यते । तेषां किं चन्द्रलोके गमनमस्ति न वेति संशये अस्ति चन्द्रलोके गमनम् । कुतः ? तेषामपि तत्र गमनं श्रुतमस्ति "ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" (कौषी० १।२) इति सर्वेषामेव चन्द्रलोके गमनमविशेषेण श्रूयते ॥३।१।१२॥

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥३।१।१३॥

अथैवमिष्टानिष्टकारिणोरविशेषेणैव चन्द्रलोकगमनं तर्हि कथं 'रमणीयां योनिमापद्येरन्' 'कपूयचरणा कपूयां योनिमिति पश्चात्तनवाक्ये फलभेदः' ? इति शङ्कायामाह–संयमने त्वित्यादि । तुशब्दश्चोद्यं व्यावर्तयति । संयमने यमालये स्वपापानुरूपां यामीं यातनामनुभूयैवेतरेषामनिष्टादिकारिणां चन्द्रलोक आरोहावरोहौ नान्यथा । कुतः ? तद्गतिदर्शनात् । यमलोकगतेः श्रुतौ दर्शनात् । "न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे" (का० ६।२) इति । सम्यगवश्यं परः परस्ताद्देहपातादूर्ध्वमयते गम्यत इति सम्परायः परलोकस्तत्साधनभूतकर्मविशेषः साम्पराय इति ॥३।१।१३॥

## स्मरन्ति च ॥३।१।१४॥

अनिष्टादिकारिणां दुष्कृतकर्मणां सर्वेषां प्राणिनां यमायत्तत्वं स्मरन्ति महर्षयः ॥३।१।१४॥

अपि च सप्त ॥३।१।१५॥

रौरवादीन् सप्त नरकानपि पापिनां फलभोगभूमित्वेन स्मरन्ति ॥३।१।१५॥

ननु सप्तसु रौरवादिषु पापफलभोगभूमिषु गच्छतां कुतो यमलोकावाप्तिरित्याह—

तत्रापि च तद्व्यापारादविरोधः ॥३।१।१६॥

रौरवादिष्वपि यमव्यापारादेव गमनात्पापिनां यमवश्यत्वस्याविरोधः ॥३।१।१६॥

एवं पञ्चसूत्र्या: पूर्वपक्षमुद्भाव्य सिद्धान्तयति—

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥३।१।१७॥

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । यदुक्तमनिष्टादिकारिणामपि चन्द्रलोकगतिरस्तीति तन्नोपपद्यते । कथमवगम्यते । विद्याकर्मणोः फलभोगार्थत्वेन देवयानपितृयाणयोरुपयोगः । तथा हि—"तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति" ( छा० ५।१०।१। ) इत्यारभ्य "तत्पुरुषोऽमानवः । स एतान् ब्रह्म गमयत्येष देवयानः पन्थाः" ( छा० ५।१०। ) इत्यन्तेन विद्याया देवयानाख्यमार्गसाधनतया प्रकृतत्वात् । "अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति" ( छा० ५।१० ) इत्यारभ्य "आकाशाच्चन्द्रमसम्" इत्यन्तेनेष्टापूर्तादिकर्मणः पितृयाणाख्यमार्गसाधनत्वेन प्रकृतत्वात् । तत्रेष्टादिकारिणां विद्यारहितत्वेन यथाब्रह्मलोकगमनासम्भवस्तथेष्टापूर्तदत्तादिपुण्यकर्मरहितानामपि चन्द्रलोकगमनासम्भव इत्याशयः ॥३।१।१७॥

अथैवं पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति पञ्चम्या आहुतेर्देहारम्भकत्वश्रवणात् तस्याश्चन्द्रगमनपूर्वकत्वश्रवणाच्च पापिनामपि देहारम्भार्थं चन्द्रलोकगमनमवश्यमङ्गीकार्यमित्याशङ्क्याह—

## न तृतीये तथोपलब्धेः ॥३।१।१८॥

तृतीये स्थाने उक्तानां पापिनां क्षुद्राणां जन्तूनां देहारम्भाय पञ्चमाहुत्यपेक्षा नास्ति। कुतः ? तथोपलब्धेः। "वेत्थ यथाऽसौ लोको न सम्पूर्यत ३ इति" (छा० ५।३।३) इति प्रश्नस्य प्रतिवचनम्। विद्याऽविद्यावतां देवयानपितृयाणादिक्रमेण ब्रह्मचन्द्रलोकप्राप्तिमभिधाय "अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते" (छा० ५।१०।८।) इति दृश्यते। अत्र वर्णितस्य तृतीयस्थानस्य प्राप्तये न द्युलोकादिगमनापेक्षेति। अत एव न पञ्चमाहुत्यपेक्षेति निर्णयः ॥३।१।१८॥

## स्मर्यतेऽपि च लोके ॥३।१।१९॥

अपि च लोके भारतादिषु पुण्यकर्मणामपि द्रोणद्रौपदीधृष्टद्युम्नादीनां चायोनिजत्वं स्मर्यते। तस्मान्न पञ्चमाहुतेर्नियमः ॥३।१।१९॥

## दर्शनाच्च ॥३।१।२०॥

किञ्च श्रुतावपि कयोश्चिदुद्भिज्जस्वेदजयोर्भूतयोः स्त्रीपुंव्यक्तिसंयोगजपञ्चमाहुतिमन्तरेणैवोत्पत्तेर्दर्शनात्पञ्चमाहुतेरनपेक्षया देहारम्भः। दर्शनं श्रुतिः "तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति" (छा० ६।३।१) इति ॥३।१।२०॥

ननु 'त्रीण्येव बीजानी'ति वचनात्कथं चतुर्थस्य स्वेदजस्यात्र ग्रहणम् ? इत्यत्राह—

## तृतीयशब्दावरोधः संशोकजस्य ॥३।१।२१॥

श्रुतौ "अण्डजं जीवजमुद्भिज्जमिति" इति तृतीयेनोद्भिज्जशब्देन संशोकजस्य स्वेदजस्यावरोधः संग्रहः। वृक्षादिकं भूमिमुद्भिद्य

जायते स्वेदजन्तु जलमित्युभयोरुद्भिज्जत्वेनाविशेषादुद्भिज्जशब्देन ग्रहणम् । तस्मादनिष्टादिकारिणां दुष्कृतशालिनां न चन्द्रलोकगमनमिति सिद्धम् ॥३।१।२१॥

*इत्यानिष्टादिकार्यधिकरणम् ।*

---

*अथ साभाव्यापत्त्यधिकरणम् ।*

## साभाव्यापत्तिरुपपत्तेः ॥३।१।२२॥

एवमिष्टादिकारिणां पितृयाणेन चन्द्रमण्डलगतिस्तत्र यावत्सम्पातं समवस्थानं ततश्च सानुशयानामेवावरोहणमित्यभिहितम् । इदानीमवरोहप्रकारश्चिन्त्यते । सचेत्थ श्रूयते "अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायु वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति" (छा० ५।१०।५) तत्र संशयः । किमेषामवरोहतामाकाशादिप्राप्तौ देवादिवदाकाशादिस्वरूपोपलब्धिराहोस्विदाकाशादिसाम्यमेव । तत्राकाशादिस्वरूपोपलब्धिरिति । कुतः ? श्रद्धारूपाणां यथा सोमरूपोपलब्धिस्तद्वदत्राप्यविशेषेणाकाशमारभ्य "वायुर्भूत्वा धूमो भवती"त्येवं ताद्रूप्यमेव श्रूयते । इति प्राप्तेऽभिधीयते–साभाव्यापत्तिरिति–साम्यापत्तिरित्यर्थः । कथमवगम्यते । उपपत्तेः । सोमादिषु पुण्यपापोपभोगार्थं सारूप्यमेवावश्यकम् । आकाशादिप्रतिपत्तौ तु तदुपभोगाभावात्स्वरूपोपलब्धेर्नोपयोगस्तस्मादाकाशादि साम्यमेवोपयान्ति । अत्राकाशादिभावश्चाकाशादिसादृश्यापत्तिरेवेत्यवगम्यते ॥३।१।२३॥

*इति साभाव्यापत्त्यधिकरणम् ।*

---

*अथ नातिचिराधिकरणम् ।*

## नातिचिरेण विशेषात् ॥३।१।२३॥

एवमाकाशादिवर्षपर्य्यन्तेषु पूर्वपूर्वसादृश्यं प्राप्योत्तरोत्तरसादृश्यं प्राप्नोतीत्युक्तम् । तदाश्रित्य किं जीवश्चिरकालमेकसादृश्यमास्थायापरसादृश्यं प्राप्नोत्याहोस्विदल्पकालं वेति संशये चिरं तिष्ठत्यचिरं वेति नियमाभावाच्चिरकालमेवेति प्राप्तेऽभिधीयते—नातिचिरेणेति । अचिरकालमेवाकाशादिभावेनावतिष्ठन्ते । कुतः ? विशेषात् । व्रीह्यादिभावावाप्त्यनन्तरं विशिष्य दुर्निष्क्रमणवचनात् । "अतो वै खलु दुर्निष्प्रपतरम्" (छा० ५।१०।६) इति व्रीह्यादिभावमुपगतानां दुःखेन निष्क्रमणमुच्यते । एतेनावगम्यतेऽतः पूर्वमाकाशादिप्रतिपत्तावचिरेणैव निष्प्रपतनमिति । दुर्निष्प्रपतरमित्यत्रच्छान्दसस्तलोपः ॥३।१।२३॥

*इति नातिचिराधिकरणम् ।*

---

*अथान्याधिष्ठिताधिकरणम् ।*

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥३।१।२४॥

अवरोहणवाक्ये—"त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते" ( छा० ५।१०।६। ) इत्यनुशयिनां जीवानां व्रीह्यादिभावेनोत्पत्तिः श्रूयते । तत्र संशयः । किं जीवानां व्रीह्यादिभावेन मुख्यजन्मोच्यत आहोस्विज्जीवान्तराधिष्ठिते व्रीह्यादावनुशयिनां तेषां सादृश्येन संसर्गमात्रमिति । किं युक्तम् ? 'जायन्त' इति वचनाद्व्रीह्यादिशरीरत्वेन सुखदुःखभाजो जायन्ते । मनुष्यो जायते । पशुर्जायत इतिवत् । एवं प्राप्तेऽभिधीयतेऽन्याधिष्ठित

इति। अन्यैर्जीवैरधिष्ठिते व्रीह्यादावनुशयिनां जीवानां संसर्गमात्रं भवति। पूर्ववत्। आकाशादिवर्षान्तसंसर्गमात्रत्ववत्। कथमवगम्यते। अभिलापात्। इष्टापूर्तादेः कर्मणः स्वर्गसुखभोगेनैव विनष्टत्वात्तदतिरिक्तस्य भुक्तशेषस्यानुशयरूपस्य च कर्मणः कर्मान्तराभावेन सुखादिभोक्तृत्वाऽनुपपत्त्या मुख्यजन्मत्वानुपपत्तेः। तस्मादाकाशादिभावापत्तिरिव व्रीह्यादिभावावाप्तिरपि तत्संसर्गरूपैव। 'जायन्त' इति च भाक्तः प्रयोगः ॥३।१।२४॥

## अशुद्धमिति चेन्न शब्दात् ॥३।१।२५॥

ननु पूर्वश्रुतमिष्टाद्यग्निष्टोमादिकर्म हिंसागर्भत्वेनाशुद्धं तत्कारिणामनुशयिनां स्वर्गादवरोहतांव्रीह्यादिषु जन्मदुःखाद्यनुभवार्थमस्त्विति चेन्न। शब्दात्। 'यजेत' इत्यादिविधिशब्दात्। अग्निष्टोमादीनां श्रुतिविहितानां कर्मणां पुण्यफलवत्त्वेन न दुःखहेतुत्वमिति ॥३।१।२५॥

## रेतःसिग्योगोऽथ ॥३।१।२६॥

इतोऽपि संश्लेषमात्रंव्रीह्यादिषु—व्रीह्यादिभावानन्तरमनुशयिना रेतः सिञ्चतीति रेतःसिक् पुरुषस्तद्योगस्तद्भाव श्रूयते—"यो यो ह्यन्नमत्ति यो रेतस्सिञ्चति तद्भूय एव भवति" ( छा० ।५।१०।६। ) इति। यथाऽत्र तद्योगमात्रमुच्यते तथा व्रीह्यादिभावोऽपि व्रीह्यादिसंश्लेषमात्रमेव ॥३।१।२६॥

नन्वेवमनुशयिनां सर्वत्र संश्लेषमात्रमुत क्वचिन्मुख्यमपि जन्मेत्यत आह—

## योनेः शरीरम् ॥३।१।२७॥

'यो रेतः सिञ्चति तद्भूय एव भवती' त्यनन्तरं "तद्य इह रमणीय चरणा अभ्याशो ह यत्तेरमणीयां योनिमापद्येरन्" ( छा०

५।१०।७। ) इत्यनुशयिनामनुशयाख्यकर्मभोगाय योनौ निषिक्ते रेतसि योनेर्योनिप्राप्ते. पश्चादेव मुख्य जन्म सम्पद्यते । अतः पूर्वमाकाशादिषु संश्लेषमात्रमेवेति सिद्धम् ॥३।१।२७॥

*इत्यन्याधिष्ठिताधिकरणम् ।*

इतिश्रीकान्यकुब्जद्विजोत्तमकुलोत्तसगुणपुरुषतत्त्वाभिज्ञविरक्तवैष्णवप्रवर
श्रीसम्प्रदायाभिवर्धकायोध्यक्विन्दु श्रीपीठसंस्थापक
श्रीमद्रामानन्दीयाचार्यश्रीरामप्रसादस्वामिकृत
ब्रह्मसूत्रभाष्यदीप श्रीजानकीकृपाभाष्य
संक्षिप्तसारे त्रितीयाध्यायस्य
प्रथमः पादः ॥ १ ॥

*श्रीभगवद्रामप्रसादाचार्यप्रणीत श्रीजानकीकृपाभाष्यस्य संक्षिप्तसारे*

## तृतीयाध्यायस्य द्वितीयः पादः ।

*अथ सन्ध्याधिकरणम् ।*

### सन्ध्ये सृष्टिराह हि ॥३।२।१॥

स्वप्नमधिकृत्य 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान् पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान् मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्ताः पुष्करिणीः स्रवन्तीः सृजते स हि कर्ता" (बृ० ४।३।१०) इत्येवं श्रूयते । तत्र संशयः । किमस्या रथादिसृष्टेः कर्ता जीवः आहोस्वित्परमात्मेति । किं युक्तम् ? जीव इति । कुतः ? तस्यैव स्वप्नकर्तृत्वात्, 'स हि कर्ता' इति तस्यैव परामर्शाच्च । सूत्रार्थस्तु—सन्ध्ये जागरितसुषुप्त्योः सन्धौ भवे स्वप्ने सृष्टौ रथादिसृष्टिः स्वप्नद्रष्टा जीवेन कृता । हि यतः स हि कर्ता स स्वप्नद्रष्टा । जीवः स्रष्टा कर्तेति श्रुतिराह ॥३।२।१॥

### निर्मातारं चैके पुत्रादयश्च ॥३।२।२॥

एवं जीवमेव स्वप्ने कामानां निर्मातारमेके शाखिनः आमनन्ति "य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः" (का० २।५।८) इति । एषु चक्षुरादिकरणेषु सुप्तेषु स्वव्यापाराद्युपरतेष्विव त्यर्थः । अत्र कामशब्देन काम्यन्त इति कामाः पुत्रादय एव निर्दिष्टाः । "सर्वान् कामान् छन्दतः प्रार्थयस्व" "शतायुषः पुत्रपौत्रान् वृणीष्व" (का० १।१।२३) इति कामानिति कामशब्देन पुत्रादीनां प्रस्तुतत्वात् । जीवस्य स्वप्ने उपकरणाद्यभावेपि सत्यसंकल्पत्वाद्रथादीनां पुत्रादीनां च सृष्टिकर्तृत्वमुपपद्यते ॥३।२।२॥

एवं प्राप्ते सिद्धान्तमाह—

## मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥३।२।३॥

तु शब्दः पूर्वपक्षव्यावृत्यर्थः । स्वाप्नस्थरथयोगाद्यर्थजातं परमात्मसृष्टमित्यर्थः । "जनकस्य कुले जाता देवमायेव निर्मिता" इत्यादाविवात्रापि मायाशब्दस्याश्चर्यार्थकत्वात् । एवञ्च स्वाप्निकानां रथादीनां स्वप्नकालमात्रावसानानां स्वप्नद्रष्टृमात्रानुभाव्यानामाश्चर्यरूपत्वमेव । अस्याश्चाश्चर्यरूपायाः सृष्टेः कर्तृत्वं परमात्मन एवोपपद्यते । तस्य सर्वदाबाधितसत्यसंकल्पत्वात् । न तु जीवस्य तदुपपद्यते । तस्य प्रजापतिवाक्ये आविर्भूतस्वरूपसमकाले सत्यकामत्व सत्यसंकल्पत्वपर्यन्तस्याविर्भावित्वश्रवणात् । संसारदशायां तत्सत्यसंकल्पत्वपर्यन्तस्य कर्मरूपाविद्यातिरोहितत्वेन कृत्स्नस्यानभिव्यक्तस्वरूपत्वाद् रथादिसृष्टेर्जीवकृतत्वं नोपपद्यते । 'कामं कामम्' मिति तु परमात्मनो निर्मातृत्वमभिधत्ते ॥३।२।३॥

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥३।२।४॥

नन्वपहतपाप्मत्वाद्या गुणा जीवस्य स्वाभाविकाश्चेत्स्युस्तर्हि कथं न सर्वदोपलभ्यन्त इत्यत्राह पराभिध्यानात्त्वित्यादि । तु शब्दः शङ्कानिवर्तकः । अस्य जीवस्यानादिपुण्यपापकर्मरूपयाऽविद्यया तिरोहितमपहतपाप्मत्वादिसत्यसंकल्पत्वान्तगुणविशिष्टं स्वाभाविकं रूपं पराभिध्यानात्परस्य परमात्मनोऽभिध्यानात् तदेकचिन्तनलक्षणात् तत्प्रसादादभिव्यज्यते । हि यतः परमात्मनः संकल्पादेवास्य जीवस्य बन्धमोक्षौ श्रूयेते ॥३।२।४॥

## देहयोगाद्वा सोऽपि ॥३।२।५॥

सोऽपि स्वरूपतिरोभावोऽपि देहयोगात् सृष्टिकाले देवमनुष्यादिदेहात्मना परिणतप्रकृतियोगात्, वाशब्दात्प्रलयकालेऽनभि

स्यापि कर्माणि कर्तृत्वं च वदन्त्युपासनस्यानियतत्वं दर्शयति। उपासनस्य पृथक् फलश्रवणादपि पशुप्राप्तिफलकगोदोहनवन्न कर्माङ्गत्वमित्याह—पृथग्घ्यप्रतिबन्धः फलमिति। हि यत उपासनस्य पृथग्भूतं फलं तच्चाप्रतिबन्धरूपं फलं वीर्यवत्तरम्। वदति हि श्रुतिरुपासनस्य पृथक् फलत्वम्। तस्माद्विद्यायाः स्वातन्त्र्यमिति सिद्धम् ॥३।३।४१॥

*इति तन्निर्धारणानियमाधिकरणम्।*

---

*अथ प्रदानाधिकरणम्।*

## प्रदानवदेव तदुक्तम् ॥३।३।४२॥

दहरविद्यायां श्रूयते "तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्" ( छा० ८।१।६। ) इति। तत्र दहराकाशस्वरूपस्य परमात्मन उपासनमभिधाय तद्गुणानामप्युक्तवचनेन पृथक्तया चिन्तनं विहितम्। तत्किं गुणचिन्तने तत्तद्गुणविशिष्टतया परमात्मचिन्तनस्यावृत्तिराहोस्विन्नेति संशये एकस्यैव परमात्मनोऽपहतपाप्मत्वादिसर्वगुणाश्रयत्वेन सकृदेव चिन्तनोपपत्तेर्नावृत्तिरिति प्राप्तेऽभिधीयते–प्रदानवदेवेति। सर्वगुणाश्रयस्य गुणिनः परमात्मनः स्वरूपस्यैक्येऽपि तत्तद्गुणविशिष्टाकारभेदात्सकृच्चिन्तनेन तत्तद्गुणविशिष्टतत्तदाकाराणां चिन्तनानुपपत्तेरावृत्तिः करणीयेति। तत्र दृष्टान्तः।प्रदानवदेवेति। यथा 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेत्' ( यजु० २।) 'इन्द्रायाधिराजाय' 'इन्द्राय स्वराज्ञे' (य० २) इत्यत्र राजत्वादिगुणविशिष्टस्यैकस्यैवेन्द्रस्य तत्तद्गुणसम्बन्धादाकारस्य भेदात्प्रदानावृत्तिर्भवति। तदुक्तं जैमिनीये 'नाना वा देवता पृथक्त्वात्' इति ॥३।३।४२॥

*इति प्रदानाधिकरणम्।*

---

*अथ लिङ्गभूयस्त्वाधिकरणम् ।*

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥३।३।४३॥

वाजसनेयकेऽग्निरहस्ये केचिन्मनश्चिताद्य साम्पादिका अग्नय श्रूयन्ते—"मनश्चितो वाक्चित प्राणचितश्चक्षुश्चित श्रोत्रचित कर्मचितोऽग्निचित" इति । तत्राथ सशय । किमेतेषामग्नीना क्रियामयक्रत्वङ्गत्वमाहोस्विद्विद्यामयक्रत्वङ्गत्वमेवेति। तत्र कर्मप्रकरणे पठितत्वात्कर्माङ्गभूता एतेऽग्नय इति प्राप्तेऽभिधीयते—लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपीति । न हि क्रियामयक्रत्वङ्गत्वमेषाम् किन्तु विद्यामयक्रत्वङ्गत्वमेव । कुत ? लिङ्गभूयस्त्वात् । एतस्मिन्प्रकरणे भूयासि लिङ्गान्येषा विद्यामयत्वमाविष्कुर्वन्ति 'तान्हैतानेवविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते" इत्यादीनि। तद्धि लिङ्ग प्रकरणाद्बलीय तदपि चोक्त पूर्वकाण्डे "श्रुतिलिङ्गवाक्यप्रकरण स्थानसमाख्याना समवाये पारदौर्बल्यमर्थविप्रकर्षात्" (जै० सू० ३।३।१३।) इति ।

'सत्य ज्ञानमनन्त ब्रह्म' "यो वेद निहित गुहायाम्" "सोऽश्नुते सर्वान् कामान्" 'तस्माद्वा एतस्मात्" इत्यत्र ब्रह्मणा सह सर्वकाम प्राप्त्युपलक्षितब्रह्मानुभवफलक ब्रह्मोपासन विधीयते। तत्र सशय । ब्रह्मत्वानुपूर्वीबाधितपरतत्त्वस्योपासन कर्तव्य रामनारायणादि शब्दबाधितपरतत्त्वस्यापीति । किं प्राप्तम् ? ब्रह्मेत्यानुपूर्वीबोधि तस्यैव परतत्त्वस्योपासन कर्तव्यम । कुत ? लिङ्गभूयस्त्वादिति । आनन्दादीना लिङ्गाना ब्रह्मेत्येवानुपूर्वीबोधितपरतत्त्वे भूयस्त्वात्। तद्धि बलीय इति लिङ्गस्य बलीयस्त्वात् । तदपीति । लिङ्गस्य बलीय स्त्वेनैव तदपि रामेत्यानुपूर्वीबोधितमपि परतत्त्वमुपासनीयम्। तत्रापि ब्रह्मलिङ्गाना दर्शनात्। तथाहि 'रमन्ते योगिनोनन्ते

सत्यानन्दे चिदात्मनि। इति रामपदे नादो परं ब्रह्माभिधीयते" इत्यादि ॥३।३।४३॥

## पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानमवत् ॥३।३।४४॥

अत्र पूर्वपक्षी समाशङ्कते—

न स्वतन्त्रोऽग्नि. किन्तु क्रिया—क्रियामयक्रत्वङ्ग स्यात्। 'इष्टकाभिरग्निं चिनुते' इति प्रकृतस्य पूर्वस्य क्रियामयस्याग्नेरयं मन. संकल्पात्मको मनश्चिताद्यग्निविकल्पः प्रकरणात्स्यात्। क्रियामयाग्निविकल्पत्वेन क्रियामयक्रत्वङ्ग. स्यादित्यर्थ । विद्यारूपाणामप्येषां क्रियामयक्रत्वङ्गत्वमुपपद्यत एव। तत्र दृष्टान्तः। मानसवदिति। यथा द्वादशाहे दशमेऽहन्यविवाक्ये विद्यारूपस्यापि मानसग्रहस्य क्रियायाः प्रकरणात्तदङ्गता सम्पद्यते तद्वदिहापि ॥३।३।४४॥

## अतिदेशाच्च ॥३।३।४५॥

मनश्चिदादीनां 'तेषामेकैकोऽग्निस्तावान् यावानसौ पूर्व.' इति पूर्वेणेष्टिकान्वितेनाग्निना मानसाग्नीनां सादृश्यस्यातिदेशाच्च तेषा क्रियाशेषत्वं प्रतीयते ॥३।३।४५॥

एव प्राप्ते सिद्धान्तमाह—

## विद्यैव तु निर्धारणाद्दर्शनाच्च ॥३।३।४६॥

तुशब्दः पक्षव्यावर्तकः। विद्यैव मनश्चिदादयो विद्यामयक्रत्वङ्गभूता एव न कर्माङ्गभूता इत्यर्थ.। कुतः? निर्धारणात्। 'ते हैते विद्याचित एव' इति निर्धारण विद्यामयक्रत्वङ्गतयैवैतेषा विद्यामयत्वं द्योतयति। न कर्माङ्गत्वम्। एवं विद्यामयक्रतुदर्शनाच्च विद्यामयक्रत्वङ्गत्वमेतेषाम्। एवकारेण कर्मप्रकरणपठितत्वेन न कर्माङ्गभूता इति निश्चयकरणाच्च। लिङ्गादपि न ते कर्माङ्गभूता इत्याह—दर्शनाच्चेति। "यत् किंचेमानि भूतानि मनसा सङ्कल्प-

यन्ति" इत्यादीना मनश्चिदाद्यग्निस्वातन्त्र्यज्ञापकलिङ्गानां दर्शनादपि न तेषा कर्माङ्गत्वम् ॥३।३।४६॥

ननु क्रियामयक्रतुप्रकरणावगताना मनश्चिदादीनामग्नीना क्रियामयक्रत्वङ्गत्वमेव न्याय्यम्, न तु विद्यामयक्रत्वनुप्रवेशाद्विद्यारूपत्वमित्यत्राह—

श्रुत्यादिवलीयस्त्वाच्च न बाधः ॥३।३।४७॥

प्रकरणाद्धि श्रुतिलिङ्गवाक्याना बलीयस्त्वाच्छ्रुत्यादिभिर्विद्यामयक्रत्वङ्गत्वेऽवगते न ततो दुर्बलेन प्रकरणेन बाध । तत्र श्रुति – 'ते हैते विद्याचित एव' इति । लिङ्गमपि 'तान् हैतानेव विदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति । एव 'एव विदे चिन्वन्ति' इति वाक्यमपि । तस्मादेभि प्रमाणैर्विद्यामयक्रत्वङ्गत्वमेवैतेषामिति ॥३।३।४७॥

पृथक्फलसम्बन्धाश्रवणाद्विधिप्रत्ययाभावाच्च न विद्यामयक्रत्वमित्यत्राह—

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥३।३।४८॥

अत्र विद्यामयक्रतुविधिरवश्य कल्पनीय । कुत ? 'मनसैषु ग्रहा अगृह्यन्त' इत्यादिक्रत्वनुबन्धात् पूर्वोक्तश्रुत्यादिभ्यश्च । यथा दहरविद्यादीना प्रज्ञान्तराणा क्रियामयात्पृथक्त्वम् तथात्रापि । तदुक्तमेव 'वचनानि त्वपूर्वत्वात्' इति ॥३।३।४८॥

यदप्यतिदेशात्क्रियामयक्रतुशेषताभिहिता तत्रोच्यते—

न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥३।३।४९॥

नह्यतिदेशमात्रेणेष्टकचिताग्निसादृश्यमेषा सम्भवति । केनचिदपि सामान्येनातिदेशस्योपलब्धे । यथा "स एष मृत्युर्य एष

एतस्मिन्मण्डले" इत्यादौ मृत्युवत्सर्वसंहारकारित्वमात्रेणातिदेशो न मण्डलपुरुषस्य तल्लोकापत्तिरप्यतिदिश्यते । तथात्रापि फलसामान्येनाप्यतिदेशस्योपपत्तेः ॥३।३।४९॥

**परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥३।३।५०॥**

परेण च ब्राह्मणेन मनश्चिदाद्यग्न्यभिधायिन शब्दस्यापि ताद्विध्य विद्यामयप्रतिपादकत्व प्रतीयते । "अथ वात्र लोक एषोऽग्निचितस्तस्याप एव परिश्रिता" इत्यादिना 'स यो ह तदेव वेद लोकम्पृणानामेन भूतमेतत्सर्वमभिसम्पद्यते" इति पृथक्फला विद्यैव विधीयते । अथैव तर्हि बृहदारण्यक एवैषामनुबन्ध आवश्यक इत्यत आह—क्रियाप्रकरण एषामनुबन्धस्तु सम्पादनीयानामग्न्यङ्गानामत्र भूयस्त्वात्कृत । तस्माद्विद्यामयक्रत्वङ्गत्वमेवैतेषा मनश्चिदादीनामिति ॥३।३।५०॥

*इति लिङ्गभूयस्त्वाधिकरणम् ।*

---

*अथात्मनः शरीराधिकरणम् ।*

**एक आत्मनः शरीरे भावात् ॥३।३।५१॥**

'आत्मेति तूपगच्छन्ति' ( ब्र० सू० ४।१।३। ) इत्यत्र प्रत्यगात्मन आत्मत्वेन परमात्मोपास्य इति वक्ष्यते । तत्र शरीरे वर्त्तमानस्य कर्मवशस्य प्रत्यगात्मन कर्तृत्वभोक्तृत्वादिविशिष्ट रूपमनुसन्धेयमुत कर्मबन्धाद्विमुक्त प्रजापतिवाक्यादितापहतपाप्मत्वादिगुणविशिष्ट यथावत्स्वरूपमिति संशये, शरीरे वर्तमानस्य यादृश रूप तादृशेनैवरूपेण कर्मविधाविवोपासनविधावपि साधनानुष्ठानफलानुभवयो सम्भवात्तादृशमेव तद्रूपमनुसन्धेयमिति पूर्व पक्ष । सूत्रार्थस्तु—एके कर्तृत्वादिविशिष्टमेवात्मस्वरूपमनुसन्धेयमिति

मन्यन्ते। कुत ? शरीरे वर्तमानस्योपासकस्य तथाभावात् ॥ ३।३।५१॥

अत्राभिधीयते—

## व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥३।३।५२॥

न कर्तृत्वादिविशिष्टोऽनुसन्धेयो मुमुक्षुभिरपि तु सांसारिका दात्मनो यो व्यतिरेकः कर्मबन्धविनिर्मुक्तस्वरूपाविर्भूतापहतपाप्म त्वादिगुणविशिष्टः सोऽनुसन्धेयः। अस्य वास्तविकं यत्स्वरूपं तदेवानुसन्धेयमुपासनायामिति भावः। कुत ? तद्भावभावित्वात्। "यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" ( छा० ३।१४।१ ) इति श्रुतेः। "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः" ( गी० ) इति स्मृतेश्च। उपलब्धिवत्। ब्रह्मोपलब्धिवत्। यथा यथावस्थितब्रह्मस्वरूपोपासनयुक्तस्यैव ब्रह्मस्वरूपोपलब्धिर्भवति तथा यथावस्थितमात्मस्वरूपं याथात्म्यानुसन्धानपरस्यैव यथावस्थितात्मोपलब्धिरपि भवति ॥३।३।५२॥

*इत्यात्मनः शरीराधिकरणम् ।*

---

*अथाङ्गावबद्धाधिकरणम् ।*

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥३।३।५३॥

कर्माङ्गाश्रितोपासनासूद्गीथावयवोङ्कारे प्राणदृष्टिः, उक्थे पृथिवीदृष्टिः, "लोकेषु पञ्चविधं सामोपासीते"ति पृथिव्यग्न्यादिषु तत्तद् दृष्टिः। तत्र संशयः। एता उपासना किं यस्यां शाखायां श्रूयन्ते तच्छाखागतोद्गीथादि क्रत्वङ्गाश्रया उत सर्वशाखागतोद्गीथा

द्याश्रया इति । किं युक्तम् ? शाखासु स्वरभेदात् प्रतिशाखमुद्गीथादीनां सम्बन्ध इति प्राप्त उच्यते–अङ्गावबद्धास्त्विति । एता अङ्गाव बद्धा उद्गीथाद्यङ्गाश्रिता उपासना न तस्या तस्या शाखाया विद्यमानो द्गीथादिष्वाश्रिता किन्तु प्रतिवेदं सर्वशाखासु विद्यमानोद्गीथा दिष्वाश्रिता । हि हेतौ यस्मादुद्गीथमुपासीतेत्युद्गाथत्वजात्यविशेषत्व श्रुते । सर्वासु शाखासु विद्यमानानामुद्गीथादीनामुद्गीथत्वाद्यवच्छि न्नत्वेनसम्बन्ध ॥३।३।५३॥

## मन्त्रादिवद्वाऽविरोधः ॥३।३।५४॥

वाशब्दश्चार्थे यथैकैकशाखावगताना न्त्वङ्गभूताना मन्त्रादीना सर्वशाखासु न्तोरेक्त्वेन सम्बन्धस्याविरोध, आदिपदेन यथा प्रयाजा एकत्राम्नाता शाखान्तरेपि प्राप्नुवन्ति तथैकशाखा विहितानामुपासनाना शाखान्तरगतोद्गाथादिषु प्राप्तेरविरोध ॥ ॥३।३।५४॥

*इत्यङ्गावबद्धाधिकरणम् ।*

---

*अथ भूमज्यायस्त्वाधिकरणम् ।*

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥३।३।५५॥

वैश्वानरविद्याया द्युलोकादित्यवाय्वाकाशाप्पृथिवीषु व्यस्तेषु "वैश्वानर सम्प्रत्यध्येषि तमेव नो ब्रूहि" (छा० ५।११।६) इत्यादा च समस्तस्यापि वैश्वानरस्योपास्ति श्रूयते । तत्र सन्देह । किम त्रोभयथाप्युपास्तिर्विवक्षिता उत समस्तोपास्तिरेवेति । किं युक्तम् ? व्यस्तोपास्ति । कुत ? व्यस्तोपास्तेरसकृत्प्रशसा श्रूयते । 'च प्रशस्यते स विधीयते' इति न्यायात्साक्षादपि विधिप्रत्ययश्रवणाच्चेति व्यस्तोपास्तिर्विवक्षितेति प्राप्तेऽभिधीयते—भूम्न इति । 'मूर्धा ते

व्यपतिष्यद्यन्मा नागमिष्य" (छा० ५।१२।२) इत्यादिना व्यस्तोपासनस्य निन्दया समस्तोपासनस्य दृढीकरणात्समस्तोपासनस्यैवात्र ज्यायस्त्व प्रतिपाद्यते न व्यस्तोपास्त । क्रतुवत् । यथा दर्शपूर्णमासादिकस्य क्रतो साङ्गप्रधानस्यैकस्यैव प्रयोगो विवक्षितो न व्यस्तानामपि प्रयाजादीना तद्वत् । तथा हि दर्शयति समस्तोपासनस्य ज्यायस्त्व श्रुति । प्राचीनशालादिभिरुक्तानि व्यस्तोपासनानि मूर्धादिपतनानिष्टफलत्वेन विनिन्द्य वैश्वानरात्मन स्वर्गलोकादिपृथिव्यन्ताना मूर्धादिपादान्तावयवत्व विधाय 'यस्त्वेतमेव प्रादेशमात्रमभिविमानमात्मान वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" (छा० ५।१८।१) तथा तद्यथेषीकातूलमग्नौ प्रोत प्रदूयेतैव हास्य सर्वे पाप्मान प्रदूयन्ते' (छा० ५।२२।३) इति समस्तोपासनस्यैव फल दर्शयति, तस्मात्समस्तोपासनस्यैव ज्यायस्त्वमिति ॥३ ३।५५॥

*इति भूमज्यायस्त्वाधिकरणम् ।*

---

*अथ शब्दादिभेदाधिकरणम् ।*

## नाना शब्दादिभेदात् ॥३।३।५६॥

अत्र परमपुरुषप्राप्तिरूपमुक्तिफलिका वैश्वानराद्या सर्वा विद्या अधिकृत्य विचार्यते । किमासा विद्यानामैक्यमाहोस्विन्नानात्वमिति । किं युक्तम् ? विद्यादुपासीतेत्यादिविधिप्रत्ययाना पर्यायत्वात् उपास्यस्य ब्रह्मणस्तत्प्राप्तिरूपफलस्य च सर्वत्रैक्याद्विद्यैक्यमिति प्राप्तेऽभिधीयते—नानेति । उक्ता विद्या नानैव । कुत ? उपास्यस्य ब्रह्मण एकत्वेऽपि शब्दादिभेदात् ॥३।३।५६॥

*इति शब्दादिभेदाधिकरणम् ।*

---

*अथ विकल्पाधिकरणम् ।*

## विकल्पोऽविशिष्टफलत्वात् ॥३।३।५७॥

ब्रह्मप्राप्तिफलाना दहरादिविद्यानामनुष्ठाने समुच्चयो विकल्पो वेति सशये किं युक्तम् ? अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादीना स्वर्गैकफलभूयस्त्ववाञ्छया समुच्चयेनानुष्ठानदर्शनवदासामपि विद्याना ब्रह्मानुभवफलभूयस्त्वापेक्षया समुच्चयेनानुष्ठान सम्भवतीति प्राप्तेऽभिधीयते–विकल्प इति । विकल्प एवानुष्ठान समाश्रयणीयो न तु समुच्चय । कुत ? अविशिष्टफलत्वात् । सर्वासां विद्यानामप रिमितज्ञानानन्दब्रह्मानुभवरूपस्यैकस्यैव फलत्वात् । तत्रैकया विद्यया ब्रह्मानुभवे सिद्धे विद्यान्तरानुष्ठानस्य व्यर्थत्वान्नानुष्ठाने समुच्चय ॥३।३।५७॥

## काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥३।३।५८॥

काम्या ब्रह्मप्राप्तिव्यतिरिक्तफला विद्यास्ताश्च यथेच्छ समुच्चीयेरन् विकल्पेरन्वा । कुत ? पूर्वहेत्वभावात् । दहरादिविद्यानाम परिमितानन्दब्रह्मानुभवरूपफलस्येव काम्याना विद्याना फलस्याप रिमितत्वाभावात् फलभूयस्त्वापेक्षया समुच्चयोऽपि सम्भवतीति भाव ॥३।३।५८॥

*इति विकल्पाधिकरणम् ।*

---

*अथ यथाश्रयभावाधिकरणम्*

## अङ्गेषु यथाश्रयभावः ॥३।३।५९॥

कर्माङ्गाश्रयाणामुद्गीथोपासनादीना गोदोहनादिवदधिकारान्तरत्वेनोपादानानियम पूर्वोक्त सम्भवति नवेति सशये उच्यते–

अङ्गेष्विति । अङ्गेपूद्गीथादिष्वाश्रितानामुपासनानां यथाश्रयभाव उद्गीथादिवदङ्गभावः। गोदोहनादिवत्तस्मिन्वाक्ये फलसम्बन्धाश्रवणादङ्गभावो न विरुध्यत इत्यर्थः ॥३।३।५९॥

## शिष्टेश्च ॥३।३।६०॥

शिष्टिः शासनम् विधानमिति यावत् । 'उद्गीथमुपासीत' इति यथाङ्गानां प्रतिवेदं विधानं तथा तदाश्रितानामुपासनानां विधानाविशेषाच्च तदङ्गभावो न विरुद्धयतेऽत उपादान नियमः ॥३।३।६०॥

## समाहारात् ॥३।३।६१॥

ऋग्वेदोक्तप्रणवस्य सामवेदोक्तोद्गीथस्य चैक्योपासन उद्गातृकृते फलमाह श्रुतिः "होतृपदनाद्धैवापि दुरुद्गीथमनुसमाहरति" ( छा० १।५।५) इति । अत्रोपासनस्य समाहारनियमो दृश्यते । तथा च वेदद्वयोक्तयोः प्रणवोद्गीथयोरैक्यज्ञानस्येदृशं फलं ब्रुवती श्रुतिः सर्ववेदोक्तानामप्यङ्गाश्रितोपासनानामुद्गीथादिवदङ्गभावेन समुच्चयं सूचयति ॥३।३।६१॥

## गुणसाधारण्यश्रुतेश्च ॥३।३।६२॥

इतश्च नियमेनोपादानम्। उपासनाश्रयस्योंकारस्योपासनगुणस्य च "तेनेयं त्रयी विद्या वर्तते ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति" (छा० १।१।९।) इति साधारणश्रुतेः समाहारोऽत्र दृश्यते। तच्छब्देन प्रकृतस्य सोपासनस्य प्रणवस्यैव परामर्शात्तस्यैव च सर्वत्र संचारः तथा चोपासनस्य प्रणवसहभावनियमादुद्गीथादिवदुपासनानामपि समुच्चयेनानुष्ठानम् ॥३।३।६२॥

एवं चतुर्भिः सूत्रैरित्थेयं प्राप्ते सिद्धान्तयति—

## न वा तत्सहभावाश्रुतेः ॥३।३।६३॥

वाशब्दस्त्वर्थकः पूर्वपक्षव्यावृत्त्यर्थः। अङ्गाश्रितोपासनानामङ्ग-

वत्समाहारस्य नियमो नास्ति। कुतः? तत्सहभावाश्रुतेः। "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति" इति यथाङ्गानां तत्सहभावः श्रूयते। तथाङ्गाश्रितोपासनानां तत्सहभावस्योद्गीथाङ्गभावस्याश्रुतेः। क्रत्वङ्गभावोहि सहभावः ॥३।३।६३॥

## दर्शनाच्च ॥३।३।६४॥

अङ्गाश्रितोपासनानां समुच्चयाभावस्य श्रुतौ दर्शनाच्च न तेषां समुच्चयः। तथाहि श्रुतिः "एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति" (छा० ४।१७।१०) इति। ऋग्वेदादिविहिताङ्गलोपे व्याहृतिहोमप्रायश्चिताभिज्ञत्वं ब्रह्मण एव। तद्विज्ञानवता ब्रह्मणा यज्ञादिपरिपाल्यत्वं सर्वोपासनानां समुच्चये हि। इतरेषामृत्विजां न स्यात्, सर्वेषां सर्ववित्त्वात्। अस्ति च परिपाल्यत्व कीर्तनम्। तस्मान्न सर्वोपासनासमुच्चयः ॥३।३।६४॥

*इति यथाश्रयभावाधिकरणम्।*

इतिश्रीकान्यकुब्जद्विजोत्तमकुलोत्तंसगुणपुरुषतत्त्वाभिज्ञविरक्तवैष्णवप्रवर
श्रीसम्प्रदायाभिवर्धकायोध्यकबिन्दु श्रीपीठसंस्थापक
श्रीमद्रामानन्दीयाचार्यश्रीरामप्रसादस्वामिकृत
ब्रह्मसूत्रभाष्यदीप श्रीजानकीकृपाभाष्य
*संक्षिप्तसारे तृतीयाध्यायस्य*
तृतीयः पादः ॥३॥

श्रीभगवद्रामप्रसादाचार्यप्रणीते शारीरकमीमांसायाः आनन्दभाष्ये

## तृतीयाध्यायस्य चतुर्थः पादः

*अथ पुरुषार्थाधिकरणम् ।*

### पुरुषार्थोऽतः शब्दादिति बादरायणः ॥३।४।१॥

किं कर्मणः पुरुषार्थ आहोस्विद्विद्यात इति संशयः । किं युक्तम्? कर्मणः । कुतः ? "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम्" ( छा० १।१।१० ) इति श्रुत्या सर्वकर्मसु विद्याया विनियुक्तत्वात्तस्याः कर्माङ्गत्वावगमात् । तत्वमसीत्यादीनां का गतिरिति चेत्तानि वाक्यानि कर्मसु कर्तृभूतप्रत्यगात्मनो याथात्म्यं बोधयन्ति कर्माङ्गभूतकर्तृयाथात्म्यानुसन्धानपूर्वककर्मानुष्ठानेन समीचीनपुरुषार्थावाप्तिरिति विद्यायाः कर्माङ्गत्वावगमेन कर्तृसंस्कारत्वनिश्चयात्तत्फलश्रुतेरर्थवादत्वोपपत्तेः कर्मण एव पुरुषार्थ इति प्राप्तेऽभिधीयते-पुरुषार्थोऽत इति । अतो ब्रह्मविद्यातः पुरुषार्थो ब्रह्मानुभवलक्षण । कुतः ? "ब्रह्मविदाप्नोति परम्" इत्येवमादिशब्दात् इति भगवान् बादरायणो मन्यते ॥३।४।१॥

एवं सिद्धान्तमुपक्रम्य पूर्वपक्षयति—

### शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥३।४।२॥

तत्वमस्यादिवाक्यज्ञातयाथात्म्यस्वरूपस्यात्मनः कर्माङ्गत्वेन कर्मकर्तृत्वेन कर्मशेषत्वात्तद्विद्याया अपि कर्तृसंस्कारत्वेन कर्तृद्वारा-कर्मशेषत्वोपपत्तेः । तत्र पुरुषार्थवादोऽर्थवादः । यथाऽन्येषु पर्णमयी-द्रव्ययजमानस्थाञ्जनादिसंस्कारप्रयाजादिरूपेषु द्रव्यसंस्कारकर्मस्व-पापश्लोकादिफलश्रुतिरर्थवादस्तथात्रापि पुरुषार्थश्रुतिरर्थवाद इति जैमिनिराचार्यो मन्यते ॥३।४।२॥

## आचारदर्शनात् ॥३।४।३॥

"जनको ह वैदेहो बहु दक्षिणेन यज्ञेनेजे" ( बृ० ३।१।१ ) इत्यादौ ब्रह्मविदां जनकादीनामाचारदर्शनाल्लिङ्गाद्विद्यायाः कर्माङ्गत्वम् ॥३।४।३॥

## तच्छ्रुतेश्च ॥३।४।४॥

"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" (छा० १।१।१०) इति विद्यायाः कर्माङ्गत्वश्रवणात् ॥३।४।४॥

## समन्वारम्भणात् ॥३।४।५॥

"तं विद्याकर्मणी समन्वारभेते" ( बृ० ४।४।२ ) इति श्रुतिर्विद्याकर्मणोरेकपुरुषपाण्डित्य विद्यायाः कर्माङ्गत्वं च ज्ञापयति ॥३।४।५॥

## तद्वतो विधानात् ॥३।४।६॥

निखिलवेदार्थविज्ञानवतः कर्मण्यधिकारः श्रुतिभिरुपदिश्यते । "आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे" ( छा० ।८।१५।१ ) इति । अत्राध्ययनस्यार्थावबोधपर्यन्तत्वात्सर्ववेदार्थज्ञानवतः कर्मविधानादपि लिङ्गाद्विद्यायाः कर्माङ्गत्वम् ॥३।४।६॥

## नियमाच्च ॥३।४।७॥

इतोऽपि विद्यायाः कर्माङ्गत्वम् । "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ॥ (ई० २) इति यावज्जीवं कर्माचारनियमदर्शनात्कर्मण एव पुरुषार्थो न विद्यात इति विद्यायाः कर्माङ्गत्वमेव ॥३।४।७॥

इत्येवं प्राप्ते समाधानमुच्यते—

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥३।४।८॥

तुशब्दः पूर्वपक्षव्यावर्तकः । न विद्यायाः कर्माङ्गत्वमपि तु विद्यात एव पुरुषार्थ इत्येवं भगवतो बादरायणस्य मतम् । कुतः ?

अधिकोपदेशात् । वेदान्तेषु कर्मकर्तुर्जीवादधिकस्याखिलोपासकजनमनोरथपूरकस्य परब्रह्मण उपास्यतयोपदेशात् । कथमवगम्यते । तद्दर्शनात् । वेद्यतयोपदेशस्य श्रुतिषु दर्शनात् । "तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" (पू० सू०) "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरणः" (बृ० ४।४।२२) "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" (श्वे० ६।७) इति । तस्माद्ब्रह्मानुभवलक्षणस्य फलस्यावाप्तिर्विद्यात एवेति ॥३।४।८॥

यदुक्तमाचारदर्शनाद्विद्यायाः कर्माङ्गत्वमिति तत्राह—

तुल्यन्तु दर्शनम् ॥३।४।९॥

विद्यायाः कर्माङ्गत्वाभावेऽप्याचारदर्शनं तुल्यम् "एतद्धस्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इत्यादिकाः श्रुतयो विदुषः कर्माचाराभावं दर्शयन्ति । तुशब्दश्चैतस्य मतस्य प्राबल्यमुपपादयन् जनकादिज्ञानिनां कर्माचारस्य लोकसङ्ग्रहार्थत्वेनान्यथासिद्धिं दर्शयति । मुमुक्षुभिस्तु सकामस्य कर्मणो विद्याविरोधितया लोकसङ्ग्रहार्थमनुष्ठानं त्यागो वा । निष्कामस्य कर्मणस्तु विद्याङ्गत्वेनानुष्ठानमिति विवेकः ॥३।४।९॥

यच्चोक्तं श्रुतिरेव विद्यायाः कर्माङ्गत्वमवबोधयति तत्राह—

असार्वत्रिकी ॥३।४।१०॥

'यदेव विद्यया करोती'ति श्रुतिरसार्वत्रिकी सर्वविद्याविषया न भवति । किन्तु प्रकृतोद्गीथविद्यामात्रविषयता हि तस्याः । अतो न श्रुतिबलेन विद्यायाः कर्माङ्गत्वं सिद्ध्यति ॥३।४।१०॥

यदपि समन्वारम्भणादित्युक्तं तत्राह—

विभागः शतवत् ॥३।४।११॥

'तं विद्याकर्मणी समन्वारभेते' इत्यत्रापि विद्याकर्मणोर्विभागो

ज्ञेय । विद्याहि स्वफलाय विद्यावन्त समन्वारभते, कर्म च कर्मा नुष्ठावारमिति । शतवत् । यथाऽभ्या शत दीयनामित्युक्ते विभज्य पञ्चाशदेकस्मै पञ्चाशदेकस्मै दीयते तद्वदित्यर्थ ॥३।४।११॥

यच्चोक्त तद्वतो विधानादिति तत्रोत्तरयति—

## अध्ययनमात्रवतः ॥३।४।१२॥

'आचार्यकुलाद्वेदमधीत्ये'ति वाक्य स्वाध्यायस्य फलवदर्थाव बोधित्वदर्शनेन कर्मावबोधिनश्च कर्म विधीयते न विद्यावत । मात्र पदेन विद्याया व्यावर्तनात् । न च मात्रपदन कर्मज्ञानमपि व्या वृत्यतामिति वाच्यम् । कर्मज्ञान विना कर्मानुष्ठानासम्भवात् । ॥३।४।१२॥

यच्चोक्त नियमाच्चेति तत्राह—

## नाविशेषात् ॥३।४।१३॥

'कुर्वन्नेवेह कर्माणी' ति नियमस्य न केवलकर्मविषयत्वमुप पद्यते । कुत ? अविशेषात् । विद्वान् कुर्वन्निति विशेषाभावात् । अत एव "सत्त्वशुद्धौ ध्रुवा स्मृति" (छा० ७।२६।२), अनन्यचेता सतत यो मा स्मरति नित्यश" (गी० १२।) इति श्रुतिस्मृतिभ्यो ध्रुवस्मृतिमतोऽनन्यचेतस्त्वेन नित्यश परमपुरुषस्य सातत्येन स्मरणपरस्य तन्नित्ययुक्तस्य तदेकभक्तेस्तदेकात्यर्थप्रियस्य ब्रह्मज्ञानिनो मनस क्षणमपि ब्रह्मचिन्तनव्यतिरिक्तवस्त्वन्तरचिन्तनपरत्वा नुपपत्ते कर्मानुष्ठानकालालाभादिति भगवदुपासनाविरोधिकर्मणा न तस्य प्रयोजनम् । तस्मान्न विद्याया कर्माङ्गत्वम् ॥३।४।१३॥

## स्तुतयेऽनुमतिर्वा ॥३।४।१४॥

वाशब्दोऽवधारणार्थक । "ईशावास्यमिद सर्वम्" (ई. १) इति विद्याप्रकरणाद्ब्रह्मविद्यास्तुतय एवेय विदुष कर्मानुमति ।

सद्विद्याबलेन कर्माण्यनुतिष्ठन्नपि कर्मफलेन न बध्यत इति भावः ॥३।४।१४॥

## कामकारेण चैके ॥३।४।१५॥

यत एके शाखिनो ब्रह्मविद्यावतः कामकारेण गार्हस्थ्यत्यागमामनन्ति । "एतत्पूर्व प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः" (बृ० ४।४।२२।) इति विदुषः स्वेच्छया कर्मसाधनप्रजादित्यागो विद्यायाः कर्माङ्गत्वाभावे लिङ्गम् ॥३।४।१५॥

## उपमर्दञ्च ॥३।४।१६॥

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" (मु० २।२।८।) इति विद्यायाः सर्वकर्मोपमर्दश्च श्रूयते । दृष्टे दर्शनसमानाकारतां नीते सतीत्यर्थः तथा च ब्रह्मविद्यायाः कर्मविनाशकत्वेन तद्विरोधित्वान्न विद्यायास्तदङ्गत्वमुपपद्यते ॥३।४।१६॥

## ऊर्ध्वरेतस्सु च शब्दे हि ॥३।४।१७॥

ऊर्ध्वरेतस्सु यतिषु विद्यायाः सत्त्वात्तेषामग्निहोत्रादिकर्मानुष्ठानानधिकारान्नविद्या कर्माङ्गम् । ननु यत्याश्रमे किं मानमित्यत आह—शब्दे हीति । वेदे ह्यूर्ध्वरेतसामाश्रमाः श्रूयन्ते—"त्रयो धर्मस्कन्धाः" (छ० ५।१०।१) इत्यादौ तपः शब्देन वैखानसपरिव्राजकयोर्ग्रहणम् उभयोस्तपःप्रधानत्वात् । अत्र त्रित्वेन संगृहीतानां चतुर्णामाश्रमाणां मध्ये यो ब्रह्मसंस्थः सयत्याश्रम एव ॥३।४।१७॥

## परामर्शं जैमिनिरचोदनाचापवदति हि ॥३।४।१८॥

'त्रयो धर्मस्कन्धा' इत्यनेनोर्ध्वरेतसामाश्रमाणामविधानाद्ब्रह्मसंस्थत्वस्य स्तुत्यर्थं परामर्शमनुवादं जैमिनिराचार्यो मन्यते । यतोऽन्या श्रुतिरपवदति चाश्रमान्तरम् 'वीरहा वा एष देवानां योग्नि-

मुद्रासयते" (यजु० १।५।२।) इत्यादिका श्रुतिराश्रमान्तर नानुष्ठेय मित्यवगमयतीति जैमिनि ॥३।४।१८॥

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥३।४।१९॥

आश्रमान्तरमप्यनुष्ठेय गृहस्थाश्रमवद्देवेति भगवान् बादरायणो मन्यते। कथमवगम्यत। साम्यश्रुते। अवश्यानुष्ठयगृहस्थाश्रमसा म्यमाश्रमान्तराणामपि श्रूयते। तथाहि— 'त्रयो धर्मस्कन्धा यज्ञो ऽध्ययन दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्सर्वे एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति।" (छा० ।२।२३।१।) इति ॥३।४।१९॥

यच्चोक्त "त्रयो धर्मस्कन्धा" इत्यस्यानुवादकत्व निराकृत्य विधित्वमेव तस्येत्युपपादयति—

## विधिर्वा धारणवत् ॥३।४।२०॥

वाशब्दोऽवधारणार्थ। सर्वेषामाश्रमाणामस्मिन्वाक्ये विधिरेव नानुवाद। नन्वनेकाश्रमविधाने वाक्यभेद स्यादिति चेन्न। विध्यविषयाणामाश्रमाणामपूर्वविधेरावश्यकत्वेन वाक्यभेदस्येष्ट त्वात्। एकवाक्यताप्रतीतावपि तत्त्यागेनापूर्वार्थविधौ दृष्टान्तमाह- धारणवदिति। यथा "अधस्तात्समिध धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति" इत्यत्राधोधारणेनैकवाक्यता ज्ञाताऽपि परित्यज्यत विधीयते च स्रुग्दण्डस्योपरि समिद्धारणमपूर्वार्थतया। "विधिस्तु धारणेऽपूर्वत्वात्" (जै० सू० ३।४।१५।) इति प्रकरणे। तथाऽत्राप्या श्रमपरामर्शश्रुतिर्विधिरेवेत्यवगम्यत। वस्तुतस्त्वस्मिन् वाक्ये ज्ञानिनो विरक्तस्य भगवद्भक्तस्य विशुद्धाश्रमावस्थितत्वेन तल्लक्षण मस्मिन्वाक्ये ब्रह्मसंस्थत्वमेव विधीयत। गृहस्थाद्याश्रमाननूद्यानित्य फलत्वेन तेषामनुष्ठान आदरातिशयाभावमभिधाय ब्रह्मसंस्थत्वस्यै

वाविनाशिफलत्वेनात्र स्तूयमानत्वाद् । यत्स्तूयते तद्विधीयत इति न्यायादिति सर्वं समञ्जसम् ॥३।४।२०॥

*इति पुरुषार्थाधिकरणम् ।*

*अथ स्तुतिमात्राधिकरणम् ।*

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥३।४।२१॥

उद्गीथादिविद्यासु श्रूयते "स एष रसाना रसतमः परम परार्ध्योऽष्टमो यदुद्गीथ" (छा० १।१।३।) इति । तत्र किमिद रसाना रसतमत्वादिक कर्माङ्गोद्गीथस्तुतिमात्रमाहोस्विदुद्गीथोपासनाया गुणस्य विधानमिति सशये किं युक्तम् ? रसतमत्वादिवाक्य सर्वमपि कर्माङ्गविधिस्तुतिमात्रम् । "इयमेव जुहूरादित्य कूर्म, स्वर्गोलोक आहवनीय" इतिवत् कर्माङ्गभूतोद्गीथाग्निसम्बन्धित्वेनोपादाना दिति चेन्न । कुत ? अपूर्वत्वात् । जुह्वादिविधिवदुद्गीथमुपासीतेतिप्रकरणान्तरगतस्योद्गीथादिविधेरत्रासन्निधानात् । विधिशेषत्वासम्भवेन तत्स्तुतिपरत्वानुपपत्ते । उद्गीथाद्युपासनानां रसतमत्वादिगुणानाञ्चापूर्वत्वात् प्रमाणान्तराप्राप्तत्वाद्यागादिवद्विधेयत्व मेवेति ॥३।४।२१॥

## भावशब्दाच्च ॥३।४।२२॥

"उद्गीथमुपासीत' 'सामोपासीत' इत्यादिविधिशब्दाच्चकारादपूर्वत्वाच्च विधेयत्वमेवेत्युपासनाविधानार्था एता उद्गीथाद्याः श्रुतय ॥ ३।४।२२॥

*इति स्तुतिमात्राधिकरणम् ।*

*अथ पारिप्लवार्थाधिकरणम् ।*

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥३।४।२३॥

वेदान्तेषु "प्रतर्दनो ह वै दैवोदासि" (कौ० ३।१) "अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतु" (बृ० ४।५।१) इत्येवमाद्या आख्यायिका श्रूयन्ते। ता किं पारिप्लवार्था आहोस्विन्सन्निहितविद्यास्तुत्यर्था इति संशये किं युक्तम् ? पारिप्लवार्था इति । अश्वमेधे पुत्रादिपरिवृताय राज्ञे यदनेकप्रकारककथाकथनं तत्पारिप्लवशब्दवाच्यं भवति । 'आख्यानानि शंसती'ति समेषामाख्यानानां पारिप्लवे विनियोगात् । इति प्राप्त उच्यते–इति चेन्नेति–नैवं भवितुमर्हति । कुत ? विशेषितत्वात् । 'पारिप्लवमाचक्षीतेत्युपक्रम्य 'मनुर्वैवस्वतो राजा' इत्याद्यश्वमेधयज्ञवाक्यशेषे कासाञ्चित्कथानां पारिप्लवशेषत्वेन विशेषितत्वात् । अत औपनिषदकथाना न पारिप्लवशेषत्वम् ॥३।४।२३॥

तर्हि किमर्था औपनिषदकथा इत्यत आह––

## तथा चैकवाक्योपबन्धात् ॥३।४।२४॥

एवं रीत्या पारिप्लवार्थत्वाभावे सत्येकवाक्यतोपबन्धात् । औपनिषदाख्यायिकाना "आत्मा वा रे द्रष्टव्यः श्रोतव्यो निदिध्यासितव्य" (बृ० ४।५।६।) इत्यादिविधिनैकवाक्यत्वदर्शनाद्विद्यास्तुतिपरत्वेन विद्यासौकर्यार्थत्वावगमाद्विधिसन्निधिपठिततत्तद्विद्याशेषत्वमेवेति सिद्धम् ॥३।४।२४॥

*इति पारिप्लवार्थाधिकरणम् ।*



( अथाग्नीन्धनाद्यधिकरणम् )

पुरुषार्थोत शब्दादित्यधिकरणे विद्याया स्वातन्त्र्य प्रदर्श्य तत्प्रसङ्गेन प्राप्त विचार परिसमाप्य पुरुपार्थाधिकरणस्य फलमाह–

अत एव चाग्नीन्धनाद्यनपेक्षा ॥३।४।२५॥

किं ब्रह्मविद्याया स्वफलब्रह्मप्राप्तौ शेषत्वेन यज्ञादिकर्मणामपेक्षास्ति आहोस्विन्नेति सशये अस्तीति पूर्व पक्ष। कुत ? "तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन। इत्यादि श्रुतेरिति प्राप्तेऽभिधीयते—अत एवेति। ब्रह्मविद्याया स्वातन्त्र्येण ब्रह्मप्राप्तिरूपपुरुषार्थहेतुत्वादेवाग्नीन्धनादिसाध्ययज्ञादिकर्मापेक्षा नास्ति। आदिपद कर्मसाधनभूतान्नघृतादिपरम्। विविदिषायामेव यज्ञादिकर्मणा विनियोगश्रवणात्। निष्पन्नाया ब्रह्मविद्याया प्रयोजनाभावाद्, यज्ञादीनामन्वयो नास्तीत्यर्थ। ॥३।४।२५॥

इत्यग्नीन्धनाद्यधिकरणम्।

---

अथ सर्वापेक्षाधिकरणम्।

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥३।४।२६॥

किं ब्रह्मविद्याया स्वोत्पत्तौ यज्ञादिकर्मणामपेक्षास्ति न वेति सशये यथा ब्रह्मविद्याया स्वफले मोक्षे यज्ञादिकर्मापेक्षा नास्ति तथा स्वोत्पत्तावपि न कर्मापेक्षेति प्राप्तेऽभिधीयते—सर्वापेक्षेति—विद्याया स्वोत्पत्तौ सर्वेषामाश्रमकर्मणामपेक्षास्ति। कुत ? यज्ञादि श्रुते। 'तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति' 'यज्ञेन दानेन तपसाऽनाशकेन' इति वेदानुवचनेन ब्रह्मचारिण यज्ञेन दानेन गृहस्थास्तपसा वानप्रस्था अनाशकेन चतुर्थाश्रमिण इति सर्वथा

ब्रह्मचर्याद्याश्रमकर्मणां ब्रह्मविद्योत्पत्तिसाधनत्वश्रवणात् । ब्रह्मज्ञानोत्पत्तिप्रतिबन्धकान्तःकरणमालिन्यनिवृत्त्यादिपरम्परया ब्रह्मज्ञानस्य यज्ञादिजन्यत्वेन यज्ञादीनां ब्रह्मविद्योत्पत्तिसाधनत्वमवगम्यते । विविदिषन्तीत्यत्र वर्तमाननिर्देशेऽपि विधिः कल्प्यते । विविदिषासन्निधानात् यज्ञादीनां बहिरङ्गत्वम् । यथा विद्योत्पत्तौ कर्मापेक्षा तथा विद्याफलभूते मोक्षेऽपि स्यादित्यत आह—अश्ववदिति । यथाऽश्वो योग्यताबलाद्रथचर्यायां विनियुज्यते न लाङ्गलाकर्षणादौ । तथा योग्यताबलात्कर्माणि ज्ञानोत्पत्तावुपयुज्यन्ते न मोक्षे योग्यताभावादिति ॥३।४।२६॥

*इति सर्वापेक्षाधिकरणम् ।*

---

*अथ शमदमाद्यधिकरणम् ।*

## शमदमाद्युपेतःस्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥३।४।२७॥

यज्ञादीनां ज्ञानोत्पत्तौ बहिरङ्गत्वमुक्त्वा शमादीनामन्तरङ्गत्वमुच्यते । किं विद्यानिष्पत्तये गृहस्थैः शमादयोऽनुष्ठेया नवेति संशये गृहस्थानां करणव्यापाररूपकर्माङ्गत्वेन तदनुष्ठानपरत्वात्कर्मासक्तमानसैर्गृहस्थैः कर्मानुष्ठानविपरीतशमाद्यनुष्ठानासम्भवात् । ऊर्ध्वरेतस्सु च शमादिविनियोगस्य चोपपत्तेर्गृहस्थैरननुष्ठेयाः शमादय इति प्राप्तेऽभिधीयते–शमाद्युपेतस्स्यादिति । यद्यपि गृहस्थः यज्ञादिकर्मसु विनियुक्तत्वेन तदासक्तस्तथापि मुमुक्षुर्ब्रह्मविद्यार्थी गृहस्थो यज्ञाद्यनुष्ठानविशिष्टकाले शमाद्युपेतः स्यादेव । कुतः ? तदङ्गतया तद्विधेः । "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वात्मन्येवात्मानं पश्यति" ( बृ० ४।४।२३ ) इति सामान्येन

विद्याङ्गतया तेषां शमादीनां विधानात्। विहितानां चैषामवश्यानुष्ठेयत्वात्। यथा यज्ञादीनां बहिरङ्गानां विद्योत्पत्तिहेतुत्वेनानुष्ठाना तथा 'तस्मादेवंविदि' ति विद्यासान्निध्याच्छमादीनामपि विद्योत्पत्त्यन्तरङ्गसाधनत्वेनावश्यानुष्ठेयत्वादिति ॥३।४।२७॥

*इति शमदमाद्यधिकरणम् ।*

---

*अथ सर्वान्नानुमत्यधिकरणम् ।*

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥३।४।२८

बृहदारण्यके श्रूयते-प्राणविद्यायां "न ह वास्यानन्नं जग्धं भवति (बृ० ६।१।१४।) इति। अस्य प्राणोपासकस्य सर्वं पदार्थजातमनन्नमनदनीयं न भवति किन्त्वदनीयमेव भवतीत्यर्थः। तत्र संशयः। किमियं प्राणोपासकस्य सर्वान्नानुमतिः सर्वदा आहोस्वित्प्राणात्ययापत्तावेवेति किं युक्तम्? अविशेषश्रवणात्सर्वदेति प्राप्तेऽभिधीयते—सर्वान्नानुमतिश्च प्राणात्यय इति। प्राणात्यय एव परस्यामापदि विद्वांसमविद्वांसं प्रति सुरावर्ज्यं सर्वमन्नमदनीयत्वेनानुमतं नानापदि। कुतः? तद्दर्शनात्। श्रुतावापत्काले प्राणात्यये चाक्रायणप्रभृतेरभक्ष्यभक्षणत्वदर्शनात्। तथा हि-मटचीहतेषु कुरुषु दुर्भिक्षे जाते क्षुत्तृड्भ्यां पीडितः सभार्यश्चाक्रायण उषस्तिर्ब्रह्मविद्भ्रमन् कदाचिद्धस्तिपालकदेशमाश्रितोऽनशनेन प्राणसंशयमापन्नो हस्तिपालकेन प्रदत्तान् तदुच्छिष्टान् कुल्माषान् भक्षितवान्। पुनरनुपानायहस्तिपालकेनोक्ते 'उच्छिष्टं वै मे पीतं स्यादि' ति प्रतिषेधः कृतः। पुनश्चैते कुल्माषा नोच्छिष्टा इतीभ्येन पृष्टे नेत्याह चाक्रायणस्तत्र हेतुमभिदधौ। कुल्माषभक्षणं यद्यहं न कुर्यां तर्हि मे जीवनमेव न स्यादुदपानन्तु तडागादिषु स्वतो भविष्यतीति स्पष्टमेतच्छान्दोग्योपनिषदः प्रथमस्य दशमखण्डे। तस्मात्प्राणात्ययापत्तौ विदुषा

सर्वान्नानुमतिदर्शनात् प्रकृते प्राणोपासकस्य सर्वदा सर्वान्नानुज्ञानं तत्स्तुत्यर्थतयार्थवादमात्रम् ॥३।४।२८॥

## अबाधाच्च ॥३।४।२९॥

इतश्च नानापदि सर्वान्नीनत्वं ब्रह्मविदः। "आहार शुद्धौ सत्त्वशुद्धि सत्त्वशुद्धौ ध्रुवा स्मृति." इत्याहारशुद्धिविधेरबाधाच्च न सर्वदा सर्वान्नानुमतिः किन्तु प्राणात्यय एव ॥३।४।२९॥

## अपि च स्मर्यते ३।४।३०॥

अपि च प्राणसंशय एव सर्वान्नीनत्वं स्मर्यते तत्त्वविदाम्। "प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः। लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" इति ॥३।४।३०॥

## शब्दश्चातोऽकामकारे ॥३।४।३१॥

यतः सर्वान्नीनत्वमापद्विषयकमेव विदुषामतः कामकारे स्वेच्छाचारे प्रतिषेधकः शब्दोऽस्ति "तस्माद्ब्राह्मणः सुरां न पिबेदि"ति कठसंहितायाम्। तस्मात्प्राणात्ययापत्तावेव सर्वान्नानुमतिरिति सिद्धम् ॥३।४।३१॥

*इति सर्वान्नानुमत्यधिकरणम्।*

---

( *अथ विहितत्वाधिकरणम्।* )

## विहितत्वाच्चाश्रमकर्मापि ॥३।४।३२॥

सर्वापेक्षेत्यादिसूत्रे यज्ञादीनां विद्याङ्गत्वमुक्तम्। इदानीं तानि यज्ञादीनि कर्माणि किममुमुक्ष्वाश्रमस्याङ्गभूतान्युत नेति संशये केवलाश्रमस्याप्यङ्गत्वे नित्यानित्यसंयोगविरोधः स्यादिति न केवलाश्रमधर्मत्वमिति प्राप्तेऽभिधीयते–विहितत्वाच्चाश्रमकर्मापीति। केवल-

गृहस्थाश्रमिणाप्यनुष्ठेयानीति । कुत ? 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिना मुमुक्षूणामपि जीवननिमित्ततया विहितत्वात् । एकेनैव कर्त्रैकेनैव विनियोगेनोभयाङ्गत्वे नित्यानित्यसंयोगविरोध उपपद्यते । इह तु यावज्जीवमित्यमुमुक्ष्वधिकारत्वात् 'ब्राह्मणा विविदिषन्ति यज्ञेने'ति मुमुक्ष्वधिकारत्वाद्विनियोगपृथक्त्वेन न विरोध ॥३।४।३२॥

नन्वेवं यज्ञादिकर्मणाममुमुक्ष्वनुष्ठेयत्वे मुमुक्ष्वनुष्ठेयत्वं न स्यादित्यत आह—

## सहकारित्वेन च ॥३।४।३३॥

'तमेतं'मित्यादिश्रुत्या यज्ञादीनां विद्यार्थत्वेन विहितत्वात् सत्त्वशुद्धिद्वारा विद्यासहकारित्वेन मुमुक्षुणाऽपि तान्यनुष्ठेयानीत्यधिकारभेदप्रदर्शनेनोक्तविरोध परिहृत सूत्रकारेण। यथा 'खादिरो यूपो भवति' 'खादिरं वीर्यकामस्य' इत्येकस्यैव खादिरत्वस्य शास्त्रद्वयात् क्रत्वर्थत्वेन नित्यत्वं वीर्यार्थत्वेनानित्यत्वञ्च विरुध्यते तथेहाऽपि ॥ ३।४।३३ ॥

## सर्वथाऽपि त एवोभयलिङ्गात् ॥३।४।३४॥

सर्वथापि नित्यत्वेन विद्यासाधनत्वेन चोभयत्र विनियोगभेदेऽप्यनुष्ठेया यज्ञादयस्त एवोभयत्र सङ्कल्पभेदेन फलत एव भेदो यज्ञादीनां न स्वरूपत इत्यर्थ । कुत ? त एवोभयलिङ्गात्—श्रुतिस्मृत्युभयलिङ्गात्। तत्र श्रुतिलिङ्गम्—"यज्ञेन विविदिषन्ती"ति । स्मृतिलिङ्ग तु—"यज्ञो दानं तपश्चैव न त्याज्यं कार्यमेव तत्" इत्यादि ॥ ३।४।३४ ॥

## अनभिभवञ्च दर्शयति ॥३।४।३५॥

"एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते" इत्यादि श्रुति ब्रह्मचर्याद्याश्रमकर्मभि सत्त्वशुद्धिद्वारा विद्या प्राप्तस्यात्मनो

रागादिभिरनभिभवं दर्शयति । तस्मात् सर्वाश्रमनित्यकर्मणां विद्यासाधनत्वमिति ॥ ३।४।३५ ॥

*इति विहितत्वाधिकरणम् ।*

( *अथ विधुराधिकरणम् ।* )

## अन्तरा चापि तु तद्दृष्टेः ॥३।४।३६॥

आश्रमानन्तरा वर्तमानो विधुरादिरनाश्रमी । तस्य ब्रह्मविद्यायामधिकारोऽस्ति न वेति संशये *'यज्ञेन दानेन तपसानाशकेन'* त्याश्रमकर्मणामेव विद्यासाधनत्वश्रवणादनाश्रमिणां न तत्राधिकार इति प्राप्तेऽभिधीयते—अन्तरेति । आश्रममन्तरा वर्तमानस्य विद्यायामस्त्येवाधिकारः । कुतः ? तद्दृष्टेः । श्रुताव नाश्रमिणामपि रैक्वभीष्मसंवर्तवाचक्नवीप्रभृतीनां विद्यानिष्ठत्व दर्शनात् । आश्रमानाश्रमसाधारणैर्जपोपासनादिभिरेवानाश्रमिणामपिविद्यानुग्रहो भवतीत्यतोऽस्त्येव विधुराणामपि ब्रह्मविद्यायामधिकारस्तेनतेषां मोक्षसिद्धिरिति । सूत्रे च शब्दोवधारणे तु शब्दश्च पूर्वपक्ष व्यावृत्यर्थं ॥ ३।४।३६ ॥

## अपि च स्मर्यते ॥३।४।३७॥

जप्येनापि च संसिद्ध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥मनु २।८७॥
इत्यनाश्रमिणामपि जपादिभिरेव विद्यासिद्धिः स्मर्यते॥३।४।३७॥

## विशेषानुग्रहश्च ॥३।४।३८॥

*' तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यात्" (प्र १।१०)* इत्यनाश्रमनियतैर्धर्मैर्विद्याविशेषेणानुग्रहः श्रूयते ॥३।४।३८॥

कस्तर्ह्युभयोर्विशेष इत्याशङ्क्याह—

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥३।४।३९॥

तुशब्दश्चोद्यनिवर्तकः। अतोऽनाश्रमित्वादितरदाश्रमित्वं ज्यायः। बहुज्ञानसाधनाधिकारित्वाद्धर्मभूयस्त्वाज्ज्यायः। शीघ्रमेव विद्योपलब्धिराश्रमवतः स्यादितिभावः। लिङ्गाच्च—"अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः।" "संवत्सरमनाश्रमीस्थित्वा कृच्छ्रमेव चरेत्" इत्याद्यनाश्रमिण आश्रमग्रहणोपदेशपरस्मार्तलिङ्गादनाश्रमिण आश्रमित्वं ज्यायः ॥३।४।३९॥

*इति विधुराधिकरणम्।*

---

*( अथ तद्भूताधिकरणम् )*

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥३।४।४०॥

एवमनाश्रमिणो गार्हस्थ्यविधुरस्य ब्रह्मविद्यायामधिकारोऽस्तीत्यभिहितम्। इदानीं नैष्ठिकवानप्रस्थपरिव्राजकानां स्वाश्रमेभ्यः प्रच्युतानां कर्माणि विद्यासाधनानि सन्ति न वेति विषये तेषामपि कानिचिज्जपादिरूपकर्माणि विद्यासाधनानि विधुरकर्मवत्स्युरिति प्राप्तेऽभिधीयते—तद्भूतस्य तु नातद्भाव इति। मम सम्मतं जैमिनेरपि सम्मतमितिभावः। कुतः ? तद्रूपाभावेभ्यो नियमात्। नैष्ठिकादिधर्माभावात्तेभ्यः शास्त्रैर्नियमनात् "ब्रह्मचार्याचार्यकुलवासीतृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्" (छा० २।२३।१।) इति नैष्ठिकस्य नियमात्। "अरण्यमियात्ततो न पुनरेयात्" इति वैखानसस्य। तथा "सन्न्यस्याग्निं न पुनरावर्तयेत्" (यजु का ) इति

परिव्राजकस्य नियमात्। तस्मादनाश्रमित्वेनावस्थानस्य नैष्ठिकादेर प्रमाणिकत्वान्न तेषां ब्रह्मविद्यायामधिकारः ॥३।४।४०॥

यदि प्रमादान्नैष्ठिकादेः स्वधर्मात्प्रच्यवस्तर्हि तत्प्रायश्चित्तमस्ति न वेति संशये नास्तीति पूर्वपक्षयति—

## नचाधिकारिकमपि पतनानुमानात्तदयोगात् ॥३।४।४१॥

नैष्ठिकादीनामधिकारे यत्प्रायश्चित्तमभिहितं तदपि नैष्ठिकस्यावकीर्णिनो न सम्भवति। कुतः ? पतनानुमानात्तदयोगात्। स्वाश्रम धर्मप्रच्युतानां नैष्ठिकादीनां पतनस्मरणात् पतितानाञ्च प्रायश्चित्तस्यायुक्तत्वात्। "आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः। प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा" इति। तस्मादुपकुर्वाणब्रह्मचारिविषयमाधिकारिकं प्रायश्चित्तमिति ॥३।४।४१॥

## उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥३।४।४२॥

अस्य महापातकत्वाभावेन न प्रायश्चित्ताभावः। यत एक आचार्या उपपूर्वमुपपदपूर्वकमुपपातकमेवेदं मन्यन्ते। गुरुदारादि व्यतिरिक्तगमनवत् उपकुर्वाणस्येव नैष्ठिकस्यापि प्रायश्चित्तं मन्यन्ते। उभयोर्ब्रह्मचारित्वेनावकीर्णित्वस्य समानत्वात्। दृष्टान्तमाह— अशनवदिति। यथा निषिद्धे मध्वशनादौ कृते प्रायश्चित्तेन शुद्धिस्त द्वदित्यर्थः। उपकुर्वाणस्य ब्रह्मचारिण उक्तमाधिकारिकं प्रायश्चित्तं नाधिकारोणामपि भवतीत्याह—तदुक्तमिति। "उत्तरेषां चैतद्विरोधी" (गौ० १।३।४) ति स्मृतिकारैरुपकुर्वाणब्रह्मचार्यर्थमुक्तमेतत् ॥३।४।४२॥

## बहिस्तूभयथापि स्मृतेराचाराच्च ॥३।४।४३॥

तुशब्दः पूर्वमतं निवर्तयति। नैष्ठिकादीनां स्वाश्रमात्प्रच्युति रुपपातकं महापातकं वेत्युभयथापि कृतप्रायश्चित्ता अकृतप्रायश्चित्ता

वेत्युभयथापि ब्रह्मविद्याधिकारिभ्यो बहि.कर्तव्या एव। कुतः ? स्मृतेः। "प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा" ( आग्नेय १६१५१२३ ) इति। आचाराच्च–अवकीर्णिना सह शिष्टानामध्ययना द्याचाराभावाच्च। तस्मान्नाधिकारः स्वाश्रमधर्मभ्रष्टाना नैष्ठिकादीनां ब्रह्मविद्यायामिति सिद्धम् ॥३।४।४३॥

*इति तद्भूताधिकरणम् ।*

---

*अथ स्वाम्यधिकरणम् ।*

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥३।४।४४॥

किमङ्गाश्रितोपासनानि यजमानानुष्ठेयान्याहोस्विदृत्विगनुष्ठेयानीति संशये किं युक्तम् ? य कर्त्ता स फलभोक्तेति न्यायमनुसृत्य पूर्वपक्षमाह–स्वामिन इति। स्वामिनो यजमानस्यैवाङ्गाश्रितोपासनान्यनुष्ठेयानि। कुत ? तस्यैव फलश्रुतेरित्यात्रेय आचार्यो मन्यते ॥३।४।४४॥

अत्र समाधत्ते—

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥३।४।४५॥

ऋत्विगधिकृतस्यैवास्मिन्नुपासनेऽधिकारान् क्रतोरार्त्विज्यत्वेनैव तदङ्गोपासनमप्यार्त्विज्यमृत्विक्कर्तृकमेवेत्यौडुलोमिराचार्यो मन्यते। यजमानफलसाधनभूतस्य साङ्गस्य क्रतोर्निष्पादनाय यजमानेनर्त्विक् परिक्रियते। अतो यजमानपरिक्रीतर्त्विगनुष्ठितस्य कर्माङ्गाश्रितोपासनस्य फलं यजमानगामि भवतीति फलश्रुतेरप्यविरोध. ॥३।४।४५॥

*इति स्वाम्यधिकरणम् ।*

---

*अथ सहकार्यन्तरविध्यधिकरणम् ।*

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥३।४।४६॥

बृहदारण्यके श्रूयते–"तस्माद् ब्राह्मण पाण्डित्य निर्विद्य बाल्येन तिष्ठासेद्बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिरमौनञ्च मौनञ्च निर्विद्याथ ब्राह्मणः" (बृ० ३।५।१) इति। तत्र मौन विधीयते नवेति विषय। पूर्वतने वाक्ये बाल्येन तिष्ठासेदित्यत्रैव विधि समाम्नावत्र मौन न विधीयते किन्तु पाण्डित्य निर्विद्येति विहितस्या यमनुवादः। मौनपाण्डित्यशब्दयोश्च ज्ञानाभिधायकत्वादिति पूर्व पक्षः।

अत्रोच्यते–सहकार्यन्तरविधिरिति। यद्यपि यज्ञादिवद्वाह्यकर णैनिदिध्यासनमननतुष्टयं तथापि मानसजपादिवद्ब्रह्मासक्तश्चिन्तनरूप स्य निदिध्यासनस्यान्तःकरणधर्मत्वेन सम्भवत्येवात्र मौनस्य विधानम्। एवञ्चात्र पाण्डित्यं बाल्य मौनञ्चेत्येतत्त्रितयमपि ब्रह्म-विद्याया सहकार्यन्तर विधीयते विध्यादिवत्। विधीयत इति विधिः। यज्ञदानादिक आश्रमधर्म। आदिपदेन श्रवणमननयो ग्रहणम्। तद्वताऽध्ययनजब्रह्मसामान्यज्ञानवत श्रवणमननवतो वा तद्विशेषज्ञानप्राप्तावाश्रमधर्मवच्छ्रवणमननवच्च फलभूतब्रह्मसाक्षा दर्शने श्रवणमननद्वयापेक्षया तृतीयमिद सहकार्यन्तर निदिध्यास नात्मक मौनमपूर्वं विधीयते। विद्यासहकारितयार्थप्राप्तयोरपि श्रवणमननयोर्यथा 'श्रोतव्यो मन्तव्य'इत्यत्र ग्रहणम्। तथात्रापि सह-कार्यन्तरविधाने निदिध्यासनमेव विधीयत इत्यत आह–पक्षेणेति। निदिध्यासनपदस्य निरन्तरब्रह्मचिन्तनापरपर्यायस्य पक्षेण श्रवण-मननाभ्यामत्यन्तोत्कृष्टत्वम्। *अत एव पाण्डित्याद्भिन्नमेव मौनमत्र* विधीयते। तत्र पण्डा शास्त्राध्ययनजा शास्त्रीया ब्रह्मसामान्यधी

स्तद्वान् पण्डितस्तत्कृत श्रवण पाण्डित्य तन्निर्विद्य निश्चयेन प्राप्य बाल्येन बालभावेन ज्ञानबलभावेन मननेन स्थातुमिच्छेत् । बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनि मननशीलो ब्रह्मैकचिन्तनशीलस्तन्नि दिध्यासनपरो भवेत् । अमौनञ्च श्रवणमनने मौनञ्च निदिध्यासन तन्निर्विद्य तत्सिद्धावस्थाम्प्राप्याथ ब्राह्मणो भवतीत्यर्थ । ब्राह्मण श्रवणमननानन्तर निदिध्यासनपरो भवेदिति भाव ॥३।४।४६॥

## कृत्स्नभावात्तु गृहिणापसहारः ॥३।४।४७॥

तुशब्द शङ्काव्यावर्तक । कृत्स्नभावात्–सर्वेष्वाश्रमेषु विद्याया सम्भवात् सर्वेऽप्याश्रमिण स्वाश्रमकर्मानुष्ठान कुर्वन्त परमात्मान चिन्तयन्त कैमुत्यन्यायेन ब्रह्मलोक सम्पद्य न पुनरावर्तन्त इत्यस्या र्थस्य प्रदर्शनार्थं गृहस्थधर्मेणापसहार इति ॥३।४।४७॥

## मौनवदितरेषामप्युपदेशात् ॥३।४।४८॥

"तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीय" "ब्रह्म सस्थोऽमृतत्वमेति" इत्यत्र 'अथ मुनिरित्यत्र च वाक्ये पुत्रैष णायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चर न्ति" (बृ० ३।५।१।) इति परिव्राजकधर्मणोपसहार सर्वाश्रमधर्म प्रदर्शनाथ । कुत ? मौनाद्विवदितरेषामप्याश्रमधर्माणा यज्ञदानतप आदीनामुपदेशात् ॥३।४।४८॥

इति सहकार्यन्तरविध्यधिकरणम् ।

---

अथानाविष्काराधिकरणम् ।

## अनाविष्कुर्वन्नन्वयात् ॥३।४।४९॥

"तस्माद्ब्राह्मण पाण्डित्य निर्विद्य बाल्येन तिष्ठासेत्" (बृ० ३।५।१।) इत्यत्र ब्रह्मविदा स्वस्मिन्बाल्यमाविष्करणीयमिति

श्रूयते। तत्र बालस्य क्रीडनादिकं सर्वं कर्म विदुषोपादेयमाहोस्वित्त द्दवमानादिरहितत्वमेव विशेषकर्मेति संशयेऽविशेषादखिलं बालककर्मोपादेयमितिप्राप्तेऽभिधीयते—अनाविष्कुर्वन्निति। यथा बाल भावशुद्धिपूर्वकं स्वाभिजनादिकमनाविष्कुर्वन् मानापमानौ परिहाय वर्तते तथा विदुषा वर्तितव्यम्। तदेव तस्य कर्म चोपादेयं न तु शौचाचाररहित्यं तिष्ठन्मूत्रोच्चारादिकर्मापि। कुतः? अन्वयात्। विद्यानुकूलानामेव बाल्यकर्मणामन्वयात्। शौचाचाररहित्यादीनान्तु विद्या विरोधितयाऽनन्वयात्। तथाच श्रुतिः 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्" (का. २।२४) इति ॥३।४।४९॥

इत्यनाविष्काराधिकरणम्।

---

अथैहिकाधिकरणम्।

## ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥३।४।५०॥

किं विद्योत्पत्तिरिहैव जन्मन्युतामुष्मिन्नपीति संशये किं युक्तम्? इहैव जन्मनि विद्या ममास्त्विति कामनया श्रवणादिषु प्रवृत्त्यैहिकमेव विद्याजन्मेति प्राप्तेराह—ऐहिकमपीति। विद्यार्थं मनुष्ठितं फलोन्मुखं कर्म श्रवणं मननं च प्रस्तुतमित्युच्यते। तेन कर्मणा श्रवणादिना च प्रतिबन्धाभावे सत्यैहिकं विद्याजन्म भवति। प्रतिबन्धे सति त्वमुत्रापीत्यनियम एव नत्विहैवेति नियमः। कुतः? तद्दर्शनात्। श्रुतौ प्रतिबन्धाप्रतिबन्धाभ्यामनियमस्य दर्शनात्। गर्भस्थ एव च वामदेवः प्रतिबुबुधे ब्रह्मभावमिति जन्मान्तरानुष्ठितस्य कर्मणः श्रवणादेः फलं जन्मान्तरे दर्शयति। सतिप्रतिबन्धे तु विद्योत्पत्तिर्दुर्लभा ॥३।४।५०॥

इत्यैहिकाधिकरणम्।

*अथ मुक्तिफलाधिकरणम् ।*

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥३।४।५१॥

किं विद्यायामुत्पन्नायामिहैव जन्मनि मुक्तिर्जन्मान्तरे वेति संशये विद्योत्पत्तौ सत्यामिहैव मुक्तिर्भवतीति प्राप्तेराह—एव मुक्तिफलानियम इति । यथा श्रवणादिकर्मणा पौष्कल्ये इहैव विद्याजन्म भवति नान्यथा । तथा सततस्मृतिरूपायां विद्याय सत्यामिहैव जन्मनि ब्रह्मप्राप्तिरूपा मुक्तिरुपपद्यते । अन्यथा जन्मान्तरेऽपि सम्पद्यते । अतोऽनियम । कुतः ? तदवस्थावधृतेः । "सत्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीना विप्रमोक्ष" (छा० ७।२६।२) इति ध्रुवाया स्मृतेरेव कर्मबन्धविमुक्तिहेतुत्वावधारणा दिति सर्वमनवद्यम् । अभ्यासोऽध्यायसमाप्त्यर्थः ॥३।४।५१॥

*इति मुक्तिफलाधिकरणम् ।*

इतिश्रीकान्यकुब्जद्विजोत्तमकुलोत्तसगुणपुरुषतत्त्वाभिज्ञविरक्तवैष्णवप्रवर श्रीसम्प्रदायाभिवर्धकायोध्यकबिन्दु श्रीपीठसंस्थापक श्रीमद्रामानन्दीयाचार्यश्रीरामप्रसादस्वामिकृते ब्रह्मसूत्रभाष्यदीपे श्रीजानकीकृपाभाष्य संक्षिप्तसारे तृतीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥

*श्रीभगवद्रामप्रसादाचार्यप्रणीतस्य शारीरकमीमांसाया श्रीजानकी-कृपाभाष्यस्य संक्षिप्तसारे*

## चतुर्थाध्यायस्य प्रथमः पादः

*अथावृत्त्यधिकरणम् ।*

पूर्वस्मिन्नध्याये ससाधनाया विद्याया विचार कृत । अथास्मिन्नध्याये विद्यास्वरूपनिरूपणपूर्वक विद्याफलपुण्यपापाश्लेषविनाशपूर्वक परब्रह्मप्राप्तिलक्षण चिन्त्यते ।

### आवृत्तिरसकृदुपदेशात् ॥४।१।१॥

"आत्मा वारे द्रष्टव्य श्रोतव्यो मन्तव्य" (बृ० ४।५।६) "ब्रह्म वेद ब्रह्मैव भवति" (मु० ३।२।९) 'यदा पश्य पश्यते रुक्मवर्णम्" (मु० ३।१।३) "तमेव विदित्वातिमृत्युमेति" (श्वे० ३।८) इत्यादिष्वौपनिषदेषु वाक्येषु ब्रह्मप्राप्तिसाधनतयाविहित ध्यानवेदनादिक किं सकृदेव कर्त्तव्यम् आहोस्वित्तस्यावृत्तिरिति सशये सकृत्कर्त्तव्यम् । कुत ? ब्रह्मविदाप्नोति पर'मिति ब्रह्मवेदनमात्रस्य तत्प्राप्तिहेतुत्वश्रवणात् । अतो ज्योतिष्टोमादिवद्यथाश्रुत सकृदेवकर्त्तव्यमितिप्राप्तेऽभिधीयते—आवृत्तिरसकृदुपदेशादिति । ध्यानवेदनाद्यभिहितस्यावृत्ति कर्तव्या । कुत ? असकृदुपदेशात् । "निदिध्यासितव्य" (बृ० ४।५।६) इति याज्ञवल्क्येनात्मदर्शन साधनत्वेनासकृद्ध्यानकर्तव्यत्वोपदेशात् । निदिध्यासनपदस्या सकृद्ध्यानार्थकत्वात् । असकृन्निदिध्यासनमन्तरेण परमात्मसाक्षात्कारानुपपत्ते । "सत्त्वशुद्धौ ध्रुवा स्मृति स्मृतिलम्भे सर्वग्रन्थीना विप्रमोक्ष" (छा० ७।२६।२।) इत्यत्र सर्वग्रन्थिविप्रमोक्षहेतुत्वेन श्रुताया ध्रुवस्मृतेरपि ध्रुवत्वमचलत्व तैलधारावदविच्छिन्नत्वमन्यथानुपपद्यमानं स्मृते सातत्यमुपपाद्य तदावृत्तिं ज्ञापयति ।

उपास्यविषयिणी स्मृतिरेव तत्र तत्रोपासनवेदनादिपदैरभिधीयते । वेदनोपासने च समानप्रकरणाधीतत्वात्समानार्थके एवेत्यावृत्ति कर्तव्येति ॥४।१।१॥

## लिङ्गाच्च ॥४।१।२॥

इतश्च वेदनादरावृत्तिर्विधेया । यत स्मृतरयमर्थोऽवसीयते । "अनन्यचेता सतत यो मा स्मरति नित्यश । तस्याह सुलभ पार्थ नित्ययुक्तस्य योगिन ।" (गी० ) "तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा। तद्ध्यान प्रथमै पड्भिरङ्गैर्निष्पाद्यते तथा ।" (वि० पु० ६।७।९१) इत्यादिका स्मृतिरासकृदावृत्तिमेव वेदनादेरवगमयतीति ॥४।१।२॥

इत्यावृत्त्यधिकरणम् ।

---

*अथात्मत्वोपासनाधिकरणम् ।*

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥४।१।३॥

तुशब्दोऽवधारणार्थः । उपासकेन स्वात्मतयैवोपास्य ब्रह्म। *यथा स्वीयशरीरस्यात्मोपासिता प्रत्यगात्मा तथोपासितुरप्यात्मा* ब्रह्मेति ममात्मा ब्रह्मत्येवमुपासीतेति तदर्थ । कथमवगम्यते ? उपगच्छन्त्येवमेव पूर्वतना समुपासका । 'त्व वा अहमस्मि भगवो देवते अह वै त्वमसि ' इत्युपासकस्य स्वरूपेण स्वभावेन भिन्नमपि ब्रह्माहमित्येवोपासका अभ्युपगच्छन्तीति । कथञ्च तदभ्युपगम इत्याह ग्राहयन्ति चेति । एवमेव श्रुतय उपासकानवबोधयन्ति । "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीर य आत्मानमन्तरो यमयत्येष त आत्मान्तर्याम्यमृत " (बृ० ३।७।२२) इत्यादिश्रुतयस्सर्वस्य चिदचिदात्मकस्य जगत शरीरतया

परमात्मनश्च तदात्मतया प्रतिपादयन्ति । यथा स्वशरीरं प्रति प्रत्यगात्मन आत्मत्वात् 'देवोऽहम्' 'मनुष्योऽह'मित्यनुसन्धानं तथा परमात्मनोऽप्यात्मत्वादहमित्येवानुसन्धानम् । एतच्च 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते" "अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योहमस्मीति न स वेद" (बृ० १।४।१०) इत्याद्यनेकश्रुतिभिरुपपादितम् ।।४।१।३।।

*इत्यात्मत्वोपासनाधिकरणम् ।*

---

*अथ प्रतीकाधिकरणम् ।*

## न प्रतीके न हि सः ।।४।१।४।।

"मनो ब्रह्मेत्युपासीत" (छा० ३।१८।१) इत्येवमादिप्रतीकोपासनेषु संशयः । किं प्रतीके मनआदावात्मत्वबुद्धिः कर्तव्या, आहोस्विन्नेति । तत्र सर्वासूपासनासूपासनत्वसाम्याद् ब्रह्मणश्च स्वात्मत्वान्मनो ब्रह्मेति वचनेन मनआदीनां ब्रह्मरूपत्वादुपासकस्यात्मभूतब्रह्माभिन्नत्वान्मनआदावात्मबुद्धिः कर्तव्येति प्राप्तेऽभिधीयते-न प्रतीक इति । मनआदौ प्रतीके नात्मबुद्धिः कर्तव्या । तत्र हेतुर्न हि स इति । यतः स प्रतीको नह्युपासकस्यात्मा । प्रतीकोपासनेषु प्रतीकस्यैवोपासनमभिमतं न ब्रह्मणः । मनो ब्रह्मेति मनः सामानाधिकरण्येन ब्रह्मपदपाठस्तु मनआदौ ब्रह्मदृष्टिविशेषणार्थम् । अत्र प्रतीकोपासनं हि अब्रह्मणि ब्रह्मदृष्ट्या भावनम् ।।४।१।४।।

अथैवं मनसि ब्रह्मदृष्टिरुत ब्रह्मण्येव मनोदृष्टिः कर्तव्येत्यत्राह—

## ब्रह्मदृष्टिरुत्कर्षात् ।।४।१।५।।

ब्रह्मणो मनआदिभ्य उत्कृष्टत्वान्मनआदिषु ब्रह्मदृष्टिरेव साधीयसी । निकृष्टे अमात्यादावुत्कृष्टराजत्वादिबुद्धेः सफलत्वस्य

दृष्टत्वात्। राज्ञि ततो ह्यानस्यामात्यदृष्टेर्हानिकरत्वाच । तस्मादप्रतीकेषु मन आदिपूत्कृष्टस्य ब्रह्मण एव दृष्टि कर्तव्यति सिद्धम् ॥४।१।५॥

इति प्रतीकाधिकरणम् ।

---

अथादित्यादिमत्यधिकरणम् ।

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥४।१।६॥

"य एवासौ तपति तमुद्गीथमुपासीत" (छा० १।३।१।) इत्यादिषु कर्माङ्गोपासनेषु संशय । किमादित्यादिपूद्गाथादिदृष्टि कार्या, आहास्विदुद्गाथादिषु कर्माङ्गषु आदित्यादिदृष्टिरिति । तत्र पूर्वतन्न्यायेनोत्कृष्टदृष्टिनिकृष्टे कर्तव्येति नियमादुद्गीथादीना कर्मरूपत्वेन फलवत्त्वादफलेभ्य आदित्यादिभ्य उत्कृष्टत्वादादित्यादिपूद्गीथादिदृष्टिरिति प्राप्तेऽभिधीयत—आदित्यादिमतयश्चाङ्ग इति । चोऽव धारणार्थः । अङ्गे कर्माङ्ग उद्गाथादावादित्यादिमतय एव कर्तव्या । कुत ? उपपत्ते । यथा प्रोक्षणादिना संस्कृतेषु व्रीह्यादिषु प्रकृतेन कर्मणापूर्वस्य फलमुत्पद्यते । तथादित्यादिदेवतादृष्टिभि संस्कृतेषु कर्माङ्गेषूद्गाथादिषु प्रकृतस्य कर्मण फलाधिक्यलक्षणा समृद्धिरुत्पद्यत । आदित्यादिदेवताराधनेन कर्मणा फलजनकत्वमन्यथा नेति, अत आदित्यादिदृष्टिरेवाङ्गाथादिष्विति ॥४।१।६॥

इत्यादित्यादिमत्यधिकरणम् ।

---

अथासीनाधिकरणम् ।

आसीनः सम्भवात् ॥४।१।७॥

पूर्वत्र मोक्षसाधनतया यदुपासन वेदनध्याननिदिध्यासनादिपदवोध्य विहित तत्तिष्ठन्नासीन शयानो गच्छन् वाऽनियमेनानु-

तिष्ठेदुत नियमेनासीन एवेति संशये मनोधर्मत्वादुपासनस्य शरीर स्थितेरनियम इति प्राप्तेऽभिधीयते । आसीन इति । आसीन एवोपासनं विदध्यात् । कुत ? सम्भवात् । समानप्रत्ययपरम्परालक्षणस्योपासनस्यासीन एवोपासके सम्भवात् । नहि तिष्ठत पुरुषस्य सम्यगुपासन सम्भवति शरीरधारणप्रयोजकप्रयत्नापेक्षया चित्तविक्षेपात् । न वा गच्छतोऽनेकधा वस्तुदर्शनेन चित्तस्य चाञ्चल्यात् । शयानस्य निद्राप्रसङ्गात् । तस्मान्नासाग्रदृष्टि सन्नासीन एवोपासनं कुर्यात् ॥४।१।७॥

## ध्यानाच्च ॥४।१।८॥

"निदिध्यासितव्य" (बृ ४।५।६) ततस्तु त पश्यते निष्कलं ध्यायमान" (मु) इत्यादिश्रुतिभ्य उपासनस्य ध्यानरूपत्वात् ध्यानस्य च विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहलक्षणस्यानन्यचतस्त्वेन ब्रह्मैकसततचिन्तनात्मकस्यासीनेष्वेव सम्भवादासीन एवोपासीतेति इति ॥४।१।८॥

## अचलत्व चापेक्ष्य ॥४।१।९॥

"ध्यायतीव पृथिवी ध्यायतीवान्तरिक्ष ध्यायतीव द्यौर्ध्यायतीवापो ध्यायन्तीव पर्वता ध्यायन्तीव देवमनुष्या" (छा ७।६।१) इत्येवमादीना श्रुत्युक्ताना ध्यानोपचारवता पृथिवीपर्वतादीना यद् चलत्व दृश्यते तदपेक्ष्य ध्यायमानस्याचलत्वमावश्यकम् । तच्चासीनस्यैव सम्भवति । तस्मादासीन एवोपासीतेति ॥४।१।९॥

## स्मरन्ति च ॥४।१।१०॥

'शुचौ देशेप्रतिष्ठाप्य स्थिरमासनमात्मन ।
नात्युच्छ्रित नातिनीच चैलाजिनकुशोत्तरम् ॥ गी० ६।११॥
तत्रैकाग्र मन कृत्वा यतचित्तेन्द्रियक्रिय ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ गी० ६।१२॥

इत्यासीनस्यैव परमात्मन योगाख्य ध्यान स्मर्यते ॥४।१।१०॥

तच्च ध्यानमासीनेन कुत्रदेशे कदा कर्तव्यमित्यत आह—

## यत्रैकाग्रता तत्राविशेषात् ॥४।१।११॥

यत्र देशे काले वा चित्तस्यैकाग्रता सजातीयप्रत्ययप्रवाहोन्मुखता भवेत्तत्रैवोपासीत। कुत ? प्राच्यादिदिशो नदीतीरादिदेशस्य ब्रह्ममुहूर्तादिकालस्य च विशेषरूपेणाश्रवणात्। "समे शुचौ शर्करावह्निवालुकाविवर्जिते" इति वचनन्तु चित्तस्यैकाग्रतानिरूपकमेव देशमभिधत्ते ॥४।१।११॥

*इत्यासीनाधिकरणम् ।*

---

*अथाप्रायणाधिकरणम् ।*

## आप्रायणात्तत्रापि हि दृष्टम् ॥४।१।१२॥

एतन्मोक्षसाधनमुपासनमेकस्मिन्नेवाहन्यनुष्ठेयमाप्रायणादहरहर्वेति विषये "अन्तकाले तु मामेव स्मरन्मुक्त्वा कलेवरम्। य प्रयाति स मद्भाव याति नास्त्यत्र सशय ॥" इत्युक्ते देहत्यागादावेकस्मिन्नेवाहनीति प्राप्तेऽभिधीयत–आप्रायणादिति। आमरणादावृत्यानुष्ठेयमुपासनम्। कुत ? तत्रापि हि दृष्टम्। उपासनमारभ्याप्रायणान्मध्ये च कालस्तत्रापि हि दृष्टमुपासनम् "स खल्वेव वर्तयन्यावदायुष ब्रह्मलोकमभिसम्पद्यते" (छा० ८।१५।१) इत्याप्रायणमुपासनावृत्ति कर्तव्येति ॥४।१।१२॥

*इत्याप्रायणाधिकरणम् ।*

---

*अथ तदधिगमाधिकरणम् ।*

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥४।१।१३॥

अतीतेन ग्रन्थेनावशिष्ट विद्यास्वरूपमेव विचारितम्। अथ तत्फलमिदानीं चिन्त्यते किं ब्रह्मविद्याप्राप्तस्य विदुष उत्तरपूर्वाघयोर सम्बन्धविनाशावुपपद्येते न वेति सशये नोपपद्येते। कुत ? "नाभुक्त क्षीयते कर्म कल्पकोटिशतैरपि" इत्यादिशास्त्रविरोधात्। इति प्राप्तेऽभिधीयते–तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशाविति। ब्रह्मविद्याप्राप्तौ तद्बलादुत्तरपूर्वयोरघयोरश्लेषविनाशौ सम्भवत एव। कुत ? तद्व्यपदेशात्–व्यपदिशन्त्येवमेव श्रुतय। "यथा पुष्कर पलाश आपो न श्लिष्यन्त एवमेवविदि पाप कर्म न श्लिष्यते" (छा० ४।१४।३।) इत्युत्तरस्याघस्याश्लेषम्। तथा "तद्यथेषीकातूल मग्नौ प्रोत प्रदूयेतैव हास्य सर्वे पाप्मान प्रदूयन्ते" ( छा० ५।२४।३। ) "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" ( मु० २।२।८ ) इति च पूर्वसञ्चितस्याघस्य विनाशञ्च व्यपदिशन्ति। न च "नाभुक्त क्षीयते कर्म" इत्यस्य विरोध इति वाच्यम्। तस्य च फलोत्पत्तौ दार्ढ्याभिधायकत्वात्। अश्लेषविनाशप्रतिपादका नाञ्च वचसा कर्मणि या फलोत्पत्तिशक्तिरस्ति तस्या विनाशसामर्थ्यमुत्पत्त्यवरोधसामर्थ्यञ्च विद्यायामस्तीत्यभिप्राय। एवञ्चो भयोभिन्नविषयत्वान्न विरोध ॥४।१।१३॥

*इति तदधिगमाधिकरणम् ।*

---

*अथेतराधिकरणम् ।*

## इतरस्याप्येवमसंश्लेषः पाते तु ॥४।१।१४॥

उक्तन्याय पुण्याश्लेषविनाशेऽप्यतिदिशति–इतरस्याप्येवमिति। एव पापाश्लेषविनाशवत् पापादितरस्य पुण्यस्याप्यश्लेषविनाशौ स्याताम् । पुण्यस्यापि विद्याफलमोक्षविरोधित्वेन दुष्कृतसाम्यात् । पुण्यविनाशस्यापि व्यपदेशान्च—"तत्सुकृतदुष्कृते धूनुते" (कौ० १।४) "उभे हैवेष एत तरति" (बृ० ४।४।२२) "तदा विद्वान् पुण्यपापे विधूय" (मु०) इति। एव विदुष उत्तरपूर्वयो पुण्यपापयो शरीरान्तरहेतुभूतयोर्विद्याप्रभावणाश्लेषविनाशाभ्या प्रारब्धकर्मणश्च भोगेनैव क्षयाद्देहपातेऽवश्य मुक्तिरत्याह पात त्विति । तु शब्दोऽवधारणार्थक ॥४।१।१४॥

*इतीतराधिकरणम् ।*

---

*अथानारब्धकार्याधिकरणम् ।*

## अनारब्धकार्ये एव तु पूर्वे तदवधे ॥४।१।१५॥

पूर्वं ब्रह्मविद्यया पूर्वकर्मणा सर्वेषा विनाश उक्त । स किं प्रारब्धकर्मसहिताना भवत्युत प्रारब्धकर्मव्यतिरिक्तानामितिसन्देहे "क्षीयन्तचास्य कर्माणि तस्मिन्दृष्टे" इत्यविशेषेण सर्वकर्मणा क्षय श्रवणात्सर्वेषा कर्मणा क्षय इतिप्राप्तेऽभिधीयते । अनारब्धकार्येइति। न आरब्ध न निष्पादित कार्यं शरीर याभ्या पुण्यपापाभ्या ते अनारब्धकार्ये अप्रवृत्तफले पूर्वे विद्योत्पत्ते पूर्वतने अनादिकाल सञ्चिते पुण्यपापे । एवकार प्रारब्धकार्यव्यवच्छेदार्थ । न तु प्रारब्धकार्ये विद्यया विनश्यत इत्यर्थ । कुत ? तदवधे "तस्य तावदेव चिर

